श्रीः ।

# * अपरोक्षाऽनुभूतिः *

श्रीमत्परमहंसपरिव्राजकाचार्य-
शंकराचार्यविरचिता ।

श्रीस्वामिविद्यारण्यमुनिकृतया
दीपिकया
श्रीयुतभोलानाथात्मजपण्डितरामस्वरूप
द्विवेदिकृतभाषानुवादेन च समलंकृता ।

सेयं
श्रीकृष्णदासात्मजखेमराजेन
मुम्बय्यां
स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-यंत्रालये
मुद्रयित्वा प्रकाशिता.

भाद्रपद संवत् १९६५, शके १८३०.

# भूमिका.

प्रगट होकि कलिकालमें पुरुष अनेक दुःखोंसे दुःखित रहते हैं और सबही चाहतेहैं कि हमारा दुःख दूर हो जाय इस विषयमें विचार यहहै कि संसारके दुःख यद्यपि क्षण घडी महीना वर्ष इत्यादि नियमित कालकी औषध मंत्रादिकोंसेभी दूर होसक्तेहैं परन्तु अत्यन्त नाशको प्राप्त नहीं होसक्ते कि जिससे दुःखसागरसे पीछा छूटे क्योंकि मुक्तितौ ब्रह्मज्ञानके विना कदापि नहीं होसक्ती जैसा कि यजुर्वेदकी श्रुतिका अभिप्रायहै, "तमेव विदित्वातिमृत्युमेतिनान्यःपन्थाविद्यतेऽयनाय" उसब्रह्मकाही साक्षात्कार कर मुक्तिको प्राप्तहोताहै अन्य कोई उपाय मुक्तिके प्राप्त होनेका नहींहै, इसप्रकार संसारको क्लेशित देखके "परिव्राजकाचार्य्य श्रीमच्छंकराचार्य्यजी" अपरोक्षानुभूतिको रचतेभए जिसमें संक्षेपसे वेदान्त प्रक्रिया सरलरीतिसे वर्णन करीहै और इसकी संस्कृतटीकाभीहुई परन्तु ऐसे पुरुष बहुत कम होतेहैं जोकि मूल अथवा संस्कृतटीकाको समझ सकैं और जो समझसकेहैं इनकोतौ संस्कृतटीकाका भी कोई कामनहींहै केवल संस्कृतका किञ्चिन्मात्र ज्ञान रखनेवाले सत्पुरुषोंके अर्थ इस पुस्तककी स्वरूपप्रकाशिका नामवाली भाषाटीका अति स्पष्ट बनाईहै इस मेरे श्रमको देख सज्जनपुरुषोंको अवश्य आह्लाद होगा ।

श्रीयुत भोलानाथात्मज पण्डित रामस्वरूप द्विवेदी.

# अपरोक्षानुभूति विषयानुक्रमणिका.


| विषय | पृष्ठ श्लोक. |
|---|---|
| मंगलाचरणम् ... ... .... ... | १—१ |
| ग्रंथकर्तुःप्रतिज्ञा ... ... ... ... | ३—२ |
| वैराग्यादिसाधनकारणकथनम् ... ... | ५—३ |
| षड्भिःश्लोकैर्वैराग्यादिसाधनचतुष्टयस्वरूपकथनम् | ६—४ |
| विचारस्यकर्तव्यता ... ... ... ... | ११—१० |
| विचाराभावेज्ञानानुत्पत्तिः ... ... ... | १२—११ |
| पंचभिःश्लोकैर्विचारस्यस्वरूपकथनम्... ... | १३—१२ |
| पंचभिःश्लोकैरज्ञानस्यस्वरूपम् ... ... | १८—१७ |
| आत्मनःस्वप्रकाशत्वम् ... ... ... | २२—२२ |
| मूढलक्षणम्... .... ... ... ... | २३—२३ |
| पंचभिःश्लोकैर्ज्ञानस्वरूपनिरूपणम् ... ... | २४—२४ |
| शून्यवादनिराकरणम्... ... ... ... | २९—२९ |
| अष्टभिःश्लोकैर्देहात्मवादनिराक० ... ... | ३०—३० |
| कर्मकांडाभिप्रायेणापिदेहस्यात्मत्वनिरूपणम् ... | ३५—३८ |
| लिंगदेहस्यानात्मत्वनिरूपणम्... ... ... | ३६—३९ |
| स्थूलसूक्ष्मदेहाभ्यामात्मनोवैलक्ष० ... ... | ३७—४० |
| आत्मदेहविभागेशंका... ... ... ... | ३८—४१ |
| देहभेदस्यासत्त्वनिरूपणेप्रतिज्ञा... ... ... | ३९—४२ |
| जीवभेदस्यासत्त्वकथनम् ... ... ... | ३९—४३ |
| चितेर्विश्वाकारेणप्रतिभानम् ... ... ... | ४०—४४ |
| प्रपंचस्यब्रह्मोपादानत्वम् ... ... ... | ४१—४५ |

| विषय | पृष्ठ श्लोक. |
|---|---|
| श्रुतिप्रमाणेनभेदस्यमिथ्यात्वम् ... ... | ४२–४६ |
| भेदद्रष्टुःश्रुत्यादोषकथनम् ... ... ... | ४३–४८ |
| ब्रह्मकार्यस्यसर्वस्यब्रह्मरूपेणनिरूपणम् ... ... | ४४–४९ |
| जीवात्मपरमात्मनोर्भेदद्रष्टुर्भयनिरूपणम् ... | ४६–५२ |
| अज्ञानाद्भेदप्रतिभासस्यज्ञानादभेदप्रतिभासस्य–च निरूपणम् ... ... ... ... | ४६–५३ |
| एकात्मज्ञानेशोकाद्यभावनिरूपणम् ... ... | ४७–५४ |
| आत्मनोब्रह्मत्वं श्रुतिसिद्धम् ... ... ... | ४८–५५ |
| प्रपंचस्यालीकत्वंस्वप्नदृष्टांतेन ... ... ... | ४८–५६ |
| अवस्थात्रयमिथ्यात्वस्यात्मनोनित्यत्वस्यचनि० | ४८–५७ |
| अनेकदृष्टांतैर्जीवस्यकल्पितत्वनिरूपणम् ... | ५०–५९ |
| प्रपंचस्यब्रह्मणिकल्पितत्वेबहवोदृष्टांताः... ... | ५१–६१ |
| प्रपंचरूपेणब्रह्मैवभातीत्यत्रबहवोदृष्टांताः ... | ५२–६३ |
| ब्रह्मणैवसर्वव्यवहारोभवतीतियुक्त्यानिरूपणम् ... | ५३–६५ |
| प्रपंचेगृह्यमाणेपिब्रह्मणएवगृहणंभवतीत्यत्रदृष्टांतः | ५५–६७ |
| अज्ञानामात्माऽशुद्धोभातीत्यादिनिरूपणम् ... | ५५–६८ |
| अद्वैतज्ञानानंतरमात्मानात्मविभागस्यव्यर्थत्वम्... | ५६–६९ |
| अविवेकिनांदेहतादात्म्यस्यानेकदृष्टांतैर्निरूपणम्... | ५७–७० |
| अज्ञानादात्मनिदेहत्वंपश्यतीत्यत्रबहवोदृष्टांताः... | ५७–७५ |
| ज्ञानादेहाध्यासानवृत्तिनिरूपणम् ... ... | ६३–८७ |
| आत्मविचारेणकालातिक्रमणंकर्त्तव्यमितिनिरू० | ६४–८९ |

विषय पृष्ठ श्लोक


युक्त्याप्रारब्धकर्मणोनिराकरणम् ... ... ६५—९०
अज्ञानाज्जगत्प्रतीतिर्ज्ञानात्तन्निवृत्तिरितिदृष्टांता-
भ्यां निरूपणम् ... ... ... ... ६७—९४
अज्ञबोधार्थंप्रारब्धमस्ति ... ... ... ६९—९७
ज्ञानिनःप्रारब्धाभावेश्रुतेःप्रमाणत्वेनोपन्यसनम् ७०—९८
प्रारब्धांगीकारेदोषानिरूपणम् .... ... ७१—९९
पंचदशराजयोगांगवर्णनप्रतिज्ञा-
तेषांचप्रयोजनानिरूपणम् ... ... ... ७२—१००
निदिध्यासस्यावश्यकत्वम् ... ... ... ७३—१०१
पंचदशांगानांनामानि ... ... ... ७४—१०२
यमस्यलक्षणम् ... ... ... ... ७४—१०४
नियमस्य लक्षणम्... .... ... ... ७५—१०५
त्यागस्य लक्षणम् ... ... ... ... ७६—१०६
मौनस्यलक्षणम् ... ... ... ... ७७—१०७
विजनदेशस्यलक्षणम् ... ... ... ७९—११०
कालस्यनिरूपणम्... ... ... ... ७९—१११
आसनस्यनिरूपणम् ... ... ... ८०—११२
सिद्धासनस्यनिरूपणम् ... ... ... ८०—११३
मूलबंधस्यनिरूपणम् ... ... ... ८१—११४
देहसाम्यस्यनिरूपणम् ... ... ... ८२—११५
दिक्स्थितेर्निरूपणम् ... ... ... ८२—११६
प्राणायामस्यनिरूपणम् ... ... ... ८३—११८

| विषय | पृष्ठ श्लोक. |
|---|---|
| रेचकपूरककुम्भकैस्त्रिविधप्राणायामस्यनिरूपणम्... | ८४–११९ |
| प्रत्याहारस्यनिरूपणम् ... ... ... | ८५–१२१ |
| धारणायानिरूपणम् ... ... ... | ८६–१२२ |
| ध्यानस्यनिरूपणम्... ... ... ... | ८६–१२३ |
| समाधेर्निरूपणम् ... ... ... ... | ८७–१२४ |
| निदिध्यासस्यावधेर्निरूपणम् ... ... | ८८–१२५ |
| निदिध्यासनस्यफलम् ... ... ... | ८८–१२६ |
| समाधिविघ्नानांनिरूपणम् ... ... ... | ८९–१२७ |
| वृत्तेरेवबंधमोक्षकारणत्वम् ... ... ... | ९०–१२९ |
| ब्रह्मवृत्तिशून्यानांनिंदा ... ... ... | ९०–१३० |
| ब्रह्मवृत्तिपराणांवंदनीयत्वम्... ... ... | ९१–१३० |
| ब्रह्मवृत्तिपराणांबोधदार्ढ्यान्मुक्तिः ... ... | ९२–१३२ |
| बोधरहितकेवलशब्दवादिनांमोक्षाभावनिरूपणम् | ९२–१३३ |
| ब्रह्मनिष्ठानांब्रह्मवृत्त्यैवस्थितिनिरूपणम् ... | ९२–१३७ |
| कार्येइत्यादिपंचभिःश्लोकैर्वेदांतसिद्धांत विचारनिरूपणम् ... ... ... ... | ९३–१३५ |
| ब्रह्मभावनयाब्रह्मत्वंभवेदित्यत्रदृष्टांतकथनम् ... | ९६–१४० |
| प्रपंचस्यब्रह्मत्वेनभावनम् ... ... ... | ९८–१४१ |
| राजयोगस्योपसंहारः ... ... ... | ९९–१४२ |
| शुद्धचित्तानांकेवलराजयोगस्यमुक्तिप्रदत्वनि० | ९९–१४४ |

इत्यनुक्रमणिका समाप्ता ।

श्रीः ।

वेदान्तः ।

# अथ अपरोक्षाऽनुभूतिः ।

## संस्कृतटीकया भाषानुवादेन च

सहिता ।

---

**श्रीहरिं परमानन्दमुपदेष्टारमीश्वरम् ॥ व्यापकं सर्वलोकानां कारणं तं नमाम्यहम् ॥ १ ॥**

सं. टी. श्रीगणेशायनमः ॥ स्वप्रकाशश्चहेतुर्यः परमात्मा चिदात्मकः ॥ अपरोक्षानुभूत्याख्यः सोहमस्मि परं सुखम् ॥ १ ॥ ईशगुर्वात्मभेदाद्यः सकलव्यवहारभूः ॥ औपाधिकः स्वचिन्मात्रः सोऽपरोक्षानुभूतिकः ॥ २ ॥ तदेवमनुसंधाय निर्विघ्नां स्वेष्टदेवताम् ॥ अपरोक्षानुभूत्याख्यामाचार्योक्तिंप्रकाशये ॥ ३ ॥ यद्यपीयंस्वतः स्पष्टा, तथापि स्वात्मसिद्धये ॥ यत्नोयं सोपि संक्षेपात्क्रियतेऽनर्थनाशनः ॥ ४ ॥ क्वाहमुल्काकरः क्वायं सूर्यस्तेजोनिधिः किल ॥ तथापिभक्तिमान्कः किंनकुर्यात्स्वहिताप्तये ॥ ५ ॥ तत्राचार्याः स्वेष्टपरदेवताऽनुसंधानलक्षणं मंगलं निर्विघ्नग्रंथसमाप्तये स्वमनसि कृत्वा शिष्यशिक्षायै ग्रंथादौ निबध्नंति श्रीहरिमिति ॥ अहं तं नमामीत्यन्वयः ॥ अत्रेयं प्रक्रिया पदार्थौ द्वि-

विधःआत्माऽनात्माचेति तत्रात्मा द्विविधः ईश्वरो जी-
वश्चेति एतावपि द्विविधौ शुद्धाऽशुद्धभेदात् तत्राऽशुद्धौ
मायाऽविद्योपाधित्वेन भेदव्यवहारहेतू शुद्धौत्वभेदव्य-
वहारहेतू तथाऽनात्मापित्रिविधः कारणसूक्ष्मस्थूलभे-
दात् एतदेव शरीरत्रयमितिव्यवह्रियते एवं चिज्जडरूप-
वैलक्षण्यात्तमः प्रकाशयोरिव विभक्तयोरुभयोरात्माना-
त्मनोरविवेकएव बंधकारणं तयोर्विवेकस्तु मोक्षकारण-
मितिदिक् ॥ तत्र तावदहंशब्देन देहत्रयविशिष्टत्वेना-
शुद्धोजीवः अस्यैवाऽकृष्टत्वात् तं नमामि तं माया-
तत्कार्यहन्तृत्वेपि तदाश्रयभूतत्वेन सर्वकारणं वेदांत-
प्रसिद्धमीश्वरं एतस्यैव सर्वोत्कृष्टत्वात् नमामि नमस्क-
रोमि स्वात्मत्वेनानुसंदधामीत्यर्थः तस्यैव सर्वोत्कृष्ट-
त्वेनानुसंधानयोग्यत्वमाह श्रीहरिमिति श्रियं दधानमि-
त्यर्थः यद्वास्वाश्रयतया श्रियते स्वीक्रियतेप्रलयसुषु-
प्त्यादौ सर्वभूतैरिति श्रीर्जीवत्वोपाधिभूताऽविद्या तां ह-
रत्यात्मज्ञानप्रदानेन नाशयतीति श्रीहरिस्तं यद्वा-
सएवसर्वाधिष्ठानतयाश्रीरित्युच्यते श्रीरेव हरिस्तं ननु-
किमनेनाऽविद्यातत्कार्यहरणेनेत्याशंक्य परमपुरुषार्थ-
प्राप्तिर्भवतीति सूचयितुं तस्यपरमानन्दरूपतामाह
परमानंदमिति परमोऽविनाशित्वनिरतिशयत्वाभ्यामु-
त्कृष्ट आनंदः सुखविशेषस्तद्रूपमित्यर्थः ॥ तर्हि
वैषयिकसुखवज्जडः स्यादित्यत आह उपदेष्टारमिति

चार्यद्वारात्मसुखोपदेशकं चिद्रूपमित्यर्थः । ननु केवलानंदस्य कथमुपदेष्टृत्वमित्यत आह ईश्वरमिति ईष्टेऽसावीश्वरः विचित्रशक्तित्वात्सर्वसमर्थस्तं नमामीत्यन्वयः । एवमपि परिच्छिन्नत्वात् घटादिवदनात्मत्वं स्यादित्यत आह व्यापकमिति स्वसत्ताप्रकाशाभ्यां नामरूपे व्याप्नोति सव्यापकस्तं परिच्छेदकस्य देशकालादेर्मायिकत्वादनंतमित्यर्थः । ननु व्याप्यव्यापकभावेनानंतत्वमसिद्धमित्यत आह सर्वलोकानां कारणमिति । अभिन्ननिमित्तोपादानमित्यर्थः । "सत्यं ज्ञानमनंतं ब्रह्म आत्मनात्मानमभिसंविवेश" इत्यादिश्रुतेः ॥ १ ॥

भा. टी. परम आनन्द स्वरूप श्रेष्ठ उपदेश करनेवाले संसारके स्वामी सर्वव्यापी ब्रह्मादि सर्व सृष्टिके आदिकारण श्रीविष्णु भगवान्को प्रणाम करूँहूँ ॥ १ ॥

अपरोक्षानुभूतिर्वै प्रोच्यते मोक्षसिद्धये ॥ सद्भिरेव प्रयत्नेन वीक्षणीया मुहुर्मुहुः ॥ २ ॥

सं. टी. इदानीं प्रेक्षावत्प्रवृत्तयेऽनुबन्धचतुष्टयं दर्शयन् स्वचिकीर्षितं प्रतिजानीते अपरोक्षेति वैइत्यव्ययेन विद्वदनुभवं प्रमाणयति तथाचायमर्थः विद्वदनुभवप्रसिद्धायात्तत्त्वमस्यादिमहावाक्यश्रवणजाप्रत्यगभिन्नब्रह्मवि-

पया अपरोक्षानुभूतिरक्षाणामिंद्रियाणां परमतीतं न-
भवतीत्यपरोक्षमिंद्रियाधिष्ठानतत्प्रकाशत्वाभ्यां नित्य
प्रत्यक्षस्वप्रकाशात्मतत्त्वं तस्यानुभूतिर्वृत्त्यारूढाखंड-
ता यद्वा अपरोक्षाचासावनुभूतिश्चेत्यपरोक्षानुभूति-
र्विद्याऽपरपर्यायोब्रह्मसाक्षात्कारस्तत्साधनग्रंथोप्युपनि-
षच्छब्दवदपरोक्षानुभूतिशब्देनोपचर्यते झटित्यवलो-
कनमात्रेणैवोत्तमाधिकारिणां ब्रह्मात्मसाक्षात्कारकारणं
ग्रंथविषइत्यर्थः अनेन नित्यापरोक्षब्रह्मात्मतत्त्वं
विशेषयो दर्शितः स प्रोच्यते प्रकर्षेण तत्तदाशंकानिरा
करणपूर्वकं सिद्धांतरहस्यप्रदर्शनरूपेणोच्यते कथ्यत
इत्यर्थःअस्माभिःपूर्वाचार्यैरित्यर्थादध्याहारः ननु प्रायः
प्रयोजनमनुद्दिश्य न मंदोपि प्रवर्तत इतिन्यायान्नारंभ-
णीयो ग्रंथ इत्याशंक्य प्रयोजनमाह मोक्षसिद्ध्यइति
मोक्षोनाम स्वाविद्याकल्पितानात्मदेहाद्यात्मत्वाभिमा-
नरूपबंधनिवृत्तिद्वारा स्वस्वरूपावस्थानं तस्य सिद्धिः
प्राप्तिस्तदर्थं अनेनसर्वानर्थनिवृत्तिद्वारापरमानंदावाप्ति-
रूपं प्रयोजनं दर्शितं किंलक्षणाऽपरोक्षाऽनुभूतिः सद्भिः
साधुभिर्नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसंपन्नैर्मु-
मुक्षुभिरित्यर्थः एवशब्दान्नान्यैः कर्मोपासनाधिका-
रिभिरितिभावः । मुहुर्मुहुर्नैरंतर्यदीर्घकालाभ्यासप्रयत्नेन
स्नानभिक्षादावप्यनादरं कृत्वेत्यर्थः । वीक्षणीया गुरुमु-
खादवगत्य विचारणीया अनेन मुमुक्षुरधिकारी दर्शितः

एतेनैवार्थात् पूर्वकांडोत्तरकांडयोः साध्यसाधनभावः संबंधश्च दर्शितो भवतीति बोद्धव्यम् ॥ २ ॥

भा. टी. इस असार संसारसे मुक्तिके कारण "अपरोक्षानुभूति" ग्रन्थको कहूंहूं इस ग्रन्थको सज्जनपुरुष वारंवार प्रयत्न कर देखेंगे ॥ २ ॥

**स्ववर्णाश्रमधर्म्मेण तपसा हरितोषणात् ॥ साधनञ्च भवेत्पुंसां वैराग्यादिचतुष्टयम् ॥ ३ ॥**

सं. टी. ननु कार्यस्य कारणाधीनत्वात् पूर्वोक्तसाधनचतुष्टयस्य किं कारणमित्याशंक्याह स्ववर्णेति अत्र स्वशब्देन मुख्यगौणमिथ्याभेदेन त्रिविधेषु साक्षिपुत्रादिदेहादिलक्षणेष्वात्मसु मध्ये मिथ्यात्मायोग्यत्वाद्गृह्यते तस्य देहादेर्ब्राह्मणादिवर्णब्रह्मचर्याद्याश्रमप्रयुक्तेन धर्मेण ब्रह्मार्पणकृतकर्मानुष्ठानजन्येनाऽपूर्वेण पूर्वमीमांसाप्रसिद्धेन भाविफलाधारभूतेन पुण्यादिशब्दवाच्येनेत्यर्थः तथा तपसा कृच्छ्रचांद्रायणादिना प्रायश्चित्तेनेत्यर्थः पुनः हरितोषणाद्भगवत्प्रीतिकरात्सर्वभूतदयालक्षणात् कर्मविशेषात् एतैस्त्रिभिः साधनैः वैराग्यादिचतुष्टयरूपं साधनं मोक्षसाधको धर्मविशेषः पुंसां प्रभवेत् संभावनायां लिङ् यद्वैवमन्वयः स्ववर्णाश्रमधर्मरूपेण तपसा कृत्वा यद्धरितोषणं तस्मादिति यद्यपि साधनचतुष्टय

विवेकादिक्रमेण हेतुहेतुमद्भावस्तथापि वैराग्यस्या-साधारणकारणतां द्योतयितुमादौ ग्रहणं कृतमिति बोद्धव्यम् ॥ ३ ॥

भा. टी. अपने २ वर्णका धर्म्म धारण करनेसे अर्थात् ब्राह्मणोंको पढना पढाना यज्ञकरना यज्ञकराना दानलेना दान देना इन ६ छः कर्मोंकरके क्षत्रियको प्रजापालन करनेसे वैश्यको खेतीका कर्म्म करनेसे शूद्रको ब्राह्मण क्षत्रिय वैश्यकी सेवा करनेसे और आश्रमधर्म्म धारण करनेसे अर्थात् ब्रह्मचर्य्य-अवस्थामें गुरुसेवन करनेसे गृहस्थ अवस्थामें पुत्र उत्पन्न-करनेसे वानप्रस्थ अवस्थामें स्त्रीसहित तथा इकला जाकर ब्रह्मचर्य्य धारणकर अग्निहोत्रादि कर्म्म तथा ईश्वरकी आराधना करनेसे सन्यस्त अवस्थामें सर्व कर्म्म त्याग करनेसे और चान्द्रायणादि व्रत करनेसे हरिकीर्त्तनकर ईश्वरको प्रसन्न करनेसे मनुष्यको वैराग्य, नित्य अनित्य वस्तुका विवेक, शम दम आदि सम्पत्ति और मुमुक्षुत्व, यह चार साधन प्राप्त होय हैं ॥ ३ ॥

( वैराग्यस्वरूप )

ब्रह्मादिस्थावरान्तेषु वैराग्यं विषयेष्वनु ॥ यथैव काकविष्ठायां वैराग्यं तद्धि निर्म्मलम् ॥ ४ ॥

सं.टी. कीदृशं तद्वैराग्यादिचतुष्टयमित्याकांक्षायां तत्स्वयमेव व्याचष्टे ब्रह्मादीत्यारभ्यवक्तव्यासा मुमुक्षुता इत्यंतेनश्लोकषट्कात्मकेन ग्रंथेन तत्रादौ वैराग्यस्य लक्षणमाहब्रह्मादिस्थावरांतेष्विति ब्रह्मादिस्थावरांतेषु सत्यलोकादिमर्त्यलोकांतेषु भोगसाधनेषु अनु कर्मजन्यत्वेनानित्यत्वं लक्षीकृत्येत्यर्थः वैराग्यं इच्छाराहित्यं तत्र दृष्टांतमाह यथैवेति यथैव काकविष्ठायां वैराग्यं गर्दभादिविष्ठायामपि कदाचित् कस्यचित् ज्वरशांत्यर्थं ग्रहणेच्छा भवति अतः काकविष्ठाया ग्रहणं उपलक्षणमेतद्ब्रात्यादीनां विषयेष्विच्छानुदये वैराग्यस्य हेतुगर्भितं विशेषणमाह तद्धिति हि यस्मात्तद्वैराग्यं निर्मलं रागादिमलरहितम् ॥ ४ ॥

भा. टी. जिस प्रकार संसारी पुरुष काककी विष्ठामें घृणा करै है तिसी प्रकार ब्रह्माको आदिले स्थावर पर्य्यन्त विषयोंमें जो वैराग्य करना है सो निर्म्मल वैराग्य होयहै ॥ ४ ॥

( वस्तु विवेकका स्वरूप )

नित्यमात्मस्वरूपं हि दृश्यं तद्विपरीतगम् ॥ एवं यो निश्चयः सम्यग्विवेको वस्तुनः स वै ॥ ५ ॥

सं. टी. इदानीं वैराग्यकारणं विवेकं लक्षयति नित्यमिति वैप्रसिद्धं सः वस्तुनः पदार्थस्यविवेको विवेचनवि-

शेषो ज्ञेयः सक इत्यतआह एवमिति यं एवं प्रकारेण सम्यक् संशयादिशून्यो निश्चयः एवं कथमित्यतआह नित्यमिति हीति विद्वदनुभवप्रसिद्धमात्मस्वरूपं नित्यमविनाशि अबाध्यं सत्यमित्यर्थः"अविनाशी वा अरेयमात्मा" इति श्रुतेः दृश्यमानात्मस्वरूपं तद्विपरीतगं तदात्मस्वरूपं तस्माद्विपरीतत्वेन गच्छति प्राप्नोति व्यवहारभूमिमिति तथाविधं विनाशि बाध्यमित्यर्थः अत्रेदमनुमानमपि सूचितं भवति आत्मस्वरूपं नित्यं द्रष्टृत्वात् यन्न नित्यं तन्न द्रष्टृ यथा घटादीति केवलव्यतिरेकीहेतुः तथाऽनात्मस्वरूपमनित्यं दृश्यत्वात् यन्नानित्यं तन्नदृश्यं यथात्मस्वरूपमित्ययमपि केवलव्यतिरेकी हेतुः ॥ ५ ॥

भा. टी. आत्मा नित्यहै और जो कुछ संसारकी वस्तु देखनेमें आवै है सो अनित्यहै इस प्रकारका अच्छी तरह जो पुरुषको निश्चय होनाहै सो वस्तुका विवेक कहावै है ॥ ५ ॥

( शमदमका स्वरूप )

सदैव वासनात्यागः शमोयमिति शब्दितः ॥ निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते ॥ ६ ॥

सं.टी. तदेवं वैराग्यकारणं विवेकं व्याख्याय वैराग्यकार्यं शमादिषट्कं लक्षयति सदैवेत्यादित्रिभिः श्लोकैः सदैव सर्वस्मिन्नपि काले वासनात्यागः पूर्वसंस्कारोपेक्षायंऽ-

शमइतिशाब्दितः अंतःकरणनिग्रहः शमशब्दार्थः बाह्यवृत्तीनां श्रोत्रवागादीनां निग्रहो निषिद्धप्रवृत्तितिरस्कारोदम इति शब्देनाभिधीयते कथ्यते ॥ ६ ॥

भा. टी. संसारकी वासनाओंका त्याग करना 'शम' कहावे है और बाह्य वृत्तियोंको रोक लेना अर्थात् नासिकादि इन्द्रियोंको गन्धादि विषयसे हटाकर वशमें कर लेना 'दम' कहावै है ॥ ६ ॥

( उपरति और तितिक्षास्वरूप )

**विषयेभ्यः परावृत्तिः परमोपरतिर्हि सा ॥ सहनं सर्वदुःखानां तितिक्षा सा शुभा मता ॥ ७ ॥**

सं. टी. विषयेभ्यइति हीति प्रसिद्धेभ्यो बंधकेभ्यः शब्दादिभ्यो या परावृत्तिर्निवृत्तिरनित्यत्वादिदोषदर्शनेन ग्रहणानिच्छा सोपरतिरुच्यत इत्यर्थः कीदृशी सेत्यत आह परमेति परमुत्कृष्टमात्मज्ञानं यस्याः सकाशाज्जायते सा परमा आत्मज्ञानसाधनभूतेत्यर्थः अनया सर्वकर्मसंन्यासो लक्ष्यते किंच सहनमिति सर्वदुःखानां सर्वदुःखसाधनानां शीतोष्णादिद्वंद्वानां यत्सहनं प्रतीकारानिच्छा सा शुभा सुखरूपा तितिक्षा मता विदुषामित्यर्थः ॥ ७ ॥

भा. टी. विषयोंसे अत्यन्त चित्तको हटालेनेका नाम

'उपरति' है । और संपूर्ण प्रकारके दुःखोंको सह लेना सो 'तितिक्षा' कहावे है ॥ ७ ॥

( श्रद्धा और समाधानस्वरूप )

**निगमाचार्यवाक्येषु भक्तिः श्रद्धेति विश्रुता ॥ चित्तैकाग्र्यन्तु सल्लक्ष्ये समाधानमिति स्मृतम् ॥ ८ ॥**

सं. टी. अपिच निगमेति निगमाचार्यवाक्येषु वेदगुरुवचनेषु यद्वोपनिषद्व्याख्यातृपदेशेषु भक्तिर्भजनं विश्वास इत्यर्थः सा श्रद्धेति विश्रुता वेदांतप्रसिद्धा तु पुनः सल्लक्ष्ये " सदेव सोम्येदमग्रआसीत् " इत्यादिश्रुतिलक्ष्ये प्रत्यगभिन्ने ब्रह्मणि चित्तैकाग्र्यं तदेकजिज्ञासेत्यर्थः तत्समाधानमिति स्मृतम् ॥ ८ ॥

भा. टी. वेद शास्त्र पुराण और गुरुके वाक्योंमें जो भक्ति करनाहै सो 'श्रद्धा' कहावे है और शब्दादि विषयोंसें अन्तःकरणको हटाकर मोक्षोपकारक श्रवण, मनन, निदिध्यासन द्वारा निरन्तर नित्य अनित्यके विचारको समाधान कहें हैं॥८॥

( मुमुक्षुता स्वरूप )

**संसारबन्धनिर्मुक्तिः कथं मे स्यात्कदा विधे ॥ इति या सुदृढा बुद्धिर्वक्तव्या सा मुमुक्षुता ॥ ९ ॥**

सं. टी. एवं शमादिष मभिधायैतत्कार्यभूतां मुमुक्षुतामाह संसारबंधेति इति यासुदृढा बुद्धिः सा मुमुक्षुता वक्तव्येत्यन्वयः साकेत्यत आह भो विधे महैव यद्वा सर्वकर्तर्विधातर्ब्रह्मन् मे मम संसारबंधनिर्मुक्तिर्नानायोनिसंबंधनिवृत्तिः कदा कस्मिन्काले कथं केन प्रकारेण भवेदित्येवंरूपा बुद्धिर्मुमुक्षुतेत्यर्थः ॥ ९ ॥

भा. टी. किसप्रकार इस संसारबन्धनसे मेरी मुक्ति होगी ऐसी जो अत्यन्त दृढ बुद्धिहै सो मुमुक्षुता कहावे है ॥ ९ ॥

उक्तसाधानयुक्तेन विचारःपुरुषेणाहि ॥
कर्त्तव्यो ज्ञानसिद्ध्यर्थमात्मनः शुभमिच्छता ॥ १० ॥

सं. टी. इदं साधनचतुष्टयं यदर्थमपन्यस्तं तदिदानीं दर्शयति उक्तेति उक्तानि ब्रह्मादीत्यारभ्य वक्तव्यासा मुमुक्षुतेत्यंतग्रंथसंदर्भेण वर्णितानि यानि वैराग्यादिसाधनानि ज्ञानोपकरणानि तैर्युक्तेन पुरुषेणाधिकारिणा देहवता मनुष्योत्तमेन हीति विद्वत्प्रसिद्धत्वेन वक्ष्यमाणलक्षणः यद्वा हीत्यव्ययमेवार्थेऽन्यनिषेधार्थइत्यर्थः। विचारो विवेकः कर्त्तव्य आवर्त्तयितव्यः किमर्थमित्यत आह ज्ञानसिद्ध्यर्थमिति आत्मनो ज्ञानसिद्ध्यर्थं ब्रह्मात्मैक्यबोधोद्भवनाय नन्वात्मज्ञानसिद्ध्याकः पुरुषार्थ इत्याशंक्य मोक्षाख्यं चतुर्थपुरुषार्थरूपं फलं द्योतयन्

पुरुषार्थं विशिनष्टि शुभमिति शुभं परमानन्दरूपत्वेन मंगलं मोक्षसुखमित्यर्थः इच्छता प्रार्थयता आत्मनः शुभमिति वान्वयः ॥ १० ॥

भा. टी. ऊपर कहे हुए वैराग्य आदि साधनों करके युक्त अपना शुभ चाहनेवाले पुरुषको ज्ञानकी सिद्धिके निमित्त विचार करना योग्यहै। (ऊपर कहे हुए साधनोंकरके युक्त) इसकारण कहा कि 'शान्तो दान्तः' ऐसी वेदकी श्रुतिहै अर्थात् शम, दम युक्त पुरुष वेदान्तका अधिकरी होयहै। जैसे और जगहभी कहाहै "प्रशान्तचित्ताय जितेन्द्रियाय प्रक्षीणदोषाययथोक्तकारिणे ॥ गुणान्वितायानुगताय सर्वदा प्रदेयमेतत सकलं मुमुक्षवे ॥ १ ॥" शान्तचित्त जितेन्द्रिय दोषरहित शास्त्रोक्त कार्य्य करनेवाले शास्त्रोक्त गुणोंकरके युक्त शुभ आचरण करनेवाले तथा मोक्षकी इच्छा करनेवाले पुरुषको यह शास्त्र देना चाहिये ॥ १० ॥

( ज्ञानकी आवश्यकता )

**नोत्पद्यते विना ज्ञानं विचारेणान्यसाधनैः ॥ यथा पदार्थभानं हि प्रकाशेन विना क्वचित् ॥ ११ ॥**

सं. टी. ननु ज्ञानसिद्ध्यर्थं विचार एव कर्तव्य इति नियमः कुतः क्रियत इत्याशंक्य सदृष्टांतमाह नोत्पद्यतइति विचारेण विना अन्यसाधनैः कर्मोपासनालक्षणैः

ज्ञानं नोत्पद्यते तत्र दृष्टांतमाह यथेति यथा क्वचित्क-स्मिंश्चिद्देशे सूर्यादिप्रकाशेन विना पदार्थभानं घटादि-वस्तुप्रकाशो नभवति हीतिसर्वजनप्रसिद्धं अतो नि-यमः क्रियत इति भावः ॥ ११ ॥

भा. टी. विना ज्ञानके और साधनों करके नित्य अनित्य वस्तुका विचार नहीं होय है जैसे सूर्य्यदीपक इत्यादिकोंके प्रकाशके विना कहीं भी कोई घटपटादिपदार्थोंका भान नहीं होयहै ॥ ११ ॥

( ज्ञानपूर्वक विचारस्वरूप )

कोऽहं कथमिदं जातं को वै कर्ताऽस्य विद्यते ॥ उपादानं किमस्तीह विचा-रः सोऽयमीदृशः ॥ १२ ॥

सं. टी. तर्हि स विचारः कीदृश इत्यत आह कोहमि ति अहं कर्ता सुखीत्यादिव्यवह्रियमाणः कः किंस्वरूपः तथा इदं जगत् स्थावरजंगमात्मकं कथं कस्माज्जातं किमधिष्ठानमित्यर्थः तथाऽस्यप्रत्यक्षादिप्रमाणसिद्ध-स्य जगतः कर्त्तोत्पादकः को विद्यते वै इति विकल्पं द्योतयाति किं जीवदृष्टं कर्तृ किंवेश्वरः किं वान्यदेव किंचिदिति विकल्पः किं चेह जगति उपादानं घटस्य मृद्वत् किमस्ति अयमात्माजगत्कारणविषयः ईदृश एवंस्वरूपो विचारः स एव ज्ञानसाधनमित्यर्थः ॥१२॥

भा. टी. मैं कौनहूँ ? यह संसार किस प्रकार उत्पन्न हुआ ? कौन इस जगत्का कर्त्ता है ? और संसारका उपादान कारण कौन है ? इस प्रकार नानाप्रकारका जो विचार करना है सो 'विचार' है ॥ १२ ॥

नाहं भूतगणो देहो नाहं चाक्षगणस्तथा ॥ एतद्विलक्षणः कश्चिद्विचारः सोऽयमीदृशः ॥ १३ ॥

सं. टी. ननु "चैतन्यविशिष्टःकायःपुरुषः" इति बार्हस्पत्यसूत्राद्देहाकारेण परिणतानि पृथिव्यादिचत्वारि भूतान्येवात्मेति चार्वाका वदंति स एव कर्ता सुखीत्यादि सर्वव्यवहारमूलमिति सर्वजनप्रसिद्धौ सत्यामात्मविषयो विचारो न स्यादित्यतआह नाहमिति अहमहंशब्दप्रत्यालंबनः प्रत्यगात्मा भूतगणो यो देहः स न भवामि तस्य घटादिवद्दृश्यत्वादित्यर्थः तर्हींद्रियगणस्त्वं स्या इति चार्वाकैकदेशिमतमुत्थाप्य दूषयति नाहमिति च पुनरक्षगणः श्रोत्रादींद्रियसंघातोप्यहं न भवामि तथेति पदेन देहवदिंद्रियगणस्यापि भूतविकारत्वं दर्शितं "स वा एष पुरुषोऽन्नरसमयः अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्" इत्यादिश्रुतिरुभयत्र प्रमाणं ननु यदि देहद्वयं त्वं नासि तर्हि शून्यमेवस्यादित्याशंक्याह एतदिति एतद्विलक्षणः एताभ्यां स्थूल

सूक्ष्मदेहाभ्यां विपरीतधर्मः कोऽस्मि 'अस्थूलमनणवह्रस्वम्' इत्यादि श्रुतेः कश्चिदिति जात्यादिरहितत्वान्मनोवाचामगोचरत्वं दर्शितं अयमीदृशः सविचार इति व्याख्यातार्थश्चतुर्थः पादः श्लोकचतुष्टयेपि बोद्धव्यः॥ १३॥

भा. टी. मैं भूतगण समष्टिरूप देह नहीं हूँ मैं समष्टि रूप इन्द्रियोंका समूह नहीं हूँ इससे विलक्षण कोई है सो विचार कहावे है ॥ १३ ॥

**अज्ञानात्प्रभवं सर्वं ज्ञानेन प्रविलीयते ॥ सङ्कल्पो विविधः कर्त्ता विचारः सोऽयमीदृशः ॥ १४ ॥**

सं. टी. तदेवं कोहमित्येतन्निश्चित्येदानीं कथमिदं जातमित्यस्य निश्चयः क्रियते तत्र पृथिव्यादिभूतानि कार्यत्वात्स्वस्वपरमाणुभ्यो जायंत इति तार्किकादयो मन्यंते कर्मणो जायंते इतिमीमांसकाः प्रधानादेवेति सांख्याः तदेतन्निराकुर्वन्नाह अज्ञानेति सर्वं जगदिदं नामरूपात्मकमज्ञानप्रभवमज्ञानात्पूर्वोक्तस्वस्वरूपास्फुरणात्प्रभवति तथाविधं अतएवैतद्विरोधिना ज्ञानेन स्वस्वरूपस्फुरणेन तम इव प्रकाशेन प्रविलीयते निश्शेषलीनं भवतीत्यर्थः। को वै कर्तेत्यस्य निर्णयमाह संकल्पेति विविधो नानाप्रकारः संकल्पः इदं करिष्यामी

त्यादिलक्षणोंतःकरणपरिणामः कारणानुकूलव्यापार वान् कर्त्ता शेषं पूर्वोक्तम् ॥ १४ ॥

भा. टी. समस्त जगत् अज्ञानसे उत्पन्न होयहै ( अज्ञान ये है इस सब संसारकी कल्पना होयहै ) ज्ञान होयहै तब नष्ट-भाय मालूम होयहै ( अर्थात् ज्ञानका प्रकाश होनेसे स्वरूप जानाजायहै इसीकारण ज्ञानावस्थामें इस पुरुषको सङ्कल्प विकल्प नहीं होयहैं ) नानाप्रकारका जो सङ्कल्पहै सो इस संसारका कर्त्ता है इस प्रकार जो चिन्तनाहै सो विचारहै॥ १४ ॥

एतयोर्यदुपादानमेकं सूक्ष्मं सदव्ययम् ॥ यथैव मृद्घटादीनां विचारः सोऽयमीदृशः ॥ १५ ॥

सं. टी. अथोपादानं किमस्तीत्यस्य निर्णयमाह एतयोरिति एतयोरज्ञानसंकल्पयोर्यदुपादानं उत्पत्ति-स्थितिनाशाय कारणं तत्तु सत्कालत्रयाबाध्यं ब्रह्मैव नान्यादित्यर्थः अत एवाधिष्ठानज्ञाननिवर्त्त्योऽज्ञानका-र्यत्वेन मिथ्याभूतमपि जगत् यावज्ज्ञानोदयं रज्जुसर्पा-दिवत् संसारभयव्यवहारक्षमं भवेदितिभावः ब्राह्मणःस त्वेहतुः अव्ययमिति अव्ययमपक्षयरहितं अनेनैतत्पूर्व-भूताअपि जन्मादिविकारा निरस्ताः नाशश्च निरस्तः षड्भावविकाररहित्ये हेतुः एकं सजातीयादिभेदशून्यं

ताद्ध कुतो न दृश्यते तत्राह सूक्ष्ममिति सूक्ष्मं मनोवा गादींद्रियागोचरं तेषां प्रवृत्तिनिमित्तजातिक्रियादिशून्यत्वादित्यर्थः ब्रह्मण उपादानत्वे दृष्टांतमाह यथैवेति यथैव मृत्घटादीनामुपादानं तथैवेत्यर्थः एवंप्रकारेण कार्यकारणभेदो नाममात्रमिति सूचितम् ॥ १५ ॥

भा. टी. जैसे मृत्तिका घटका उपादान कारणहै और सुवर्ण कुण्डलादिका कारणहै इसी प्रकार जो एक 'सूक्ष्म' सत्यस्वरूप, अविनाशी अज्ञान 'सङ्कल्प' इनका जो उपादान कारण है सोई इस जगत्का उपदान कारणहै इसका जो निरूपण है सो विचार कहावे है ॥ १५ ॥

**अहमेकोपि सूक्ष्मश्च ज्ञाता साक्षी सद व्ययः ॥ तदहं नात्र सन्देहो विचारः सोऽयमीदृशः ॥ १६ ॥**

सं. टी. ननु यद्यपि कार्यकारणभेदो वाचारंभणमात्रस्तथापि जीवब्रह्मणोर्भेदोवास्तवः स्यादित्याशंक्याह अहमिति अत्र यत इत्यध्याहारस्तथाचायमर्थः यतोहमहंप्रत्ययवेद्योप्येकः सजातीयादिभेदशून्यो मनुष्यमात्रेप्यहंबुद्धेरेकत्वप्रतीतेरित्यर्थः च पुनः सूक्ष्म इंद्रियागोचरः पुनर्ज्ञाताऽहंकारादिप्रकाशकत्वेन चेतन इत्यर्थः तथा साक्षी साक्षादिंद्रियार्थसन्निकर्षं विनैवेक्षते पश्यति प्रकाशयतीति साक्षी निर्विकार इत्यर्थः अत एव

सद्व्ययः संश्वासावव्ययश्चविनाशापक्षयोपलक्षितसर्वे-विकारशून्य इत्यर्थः यस्मादेवंभूतोऽहं तत्तस्मादहमहं-प्रत्ययवेद्यस्तत्सत्यज्ञानादिलक्षणं ब्रह्म अत्र संदेहो नास्तीत्यर्थः सोयमीदृशो विचारइति ॥ १६ ॥

भा. टी. अहम् शब्द करके प्रतिपाद्य अर्थात् आत्मा अद्वितीय अतिसूक्ष्म जाननेवाला सर्वसाक्षी नित्य और अविनाशी ब्रह्म है इसमें कोई सन्देह नहीं है इस प्रकार जो तत्त्व निर्णय है सो विचार कहावे है ॥ १६ ॥

आत्मा विनिष्कलो ह्येको देहो बहु
भिरावृतः ॥ तयोरैक्यं प्रपश्यन्ति
किमज्ञानमतः परम् ॥ १७ ॥

सं. टी. एतदेव जीवब्रह्मैक्यज्ञानप्रदर्शनेन द्रढयति आत्मेत्यादिपंचभिः यतोऽप्रत्ययवेद्य आत्मा अतीत संततभावेन जाग्रदादिसर्वावस्थास्वनुवर्तत इत्यतमा अवस्थात्रयभावाभावसाक्षित्वेन सत्यज्ञानादिस्वरूप इत्यर्थः स त्वंपदलक्ष्यार्थोपि तत्पदलक्ष्यार्थ एव विनि-ष्कलो विशेषण निर्गतकलो निरवयवइत्यर्थः अन्यथा सावयवत्वे घटादिवद्विनाशित्वापत्तिरिति भावः अत्रहेतुः एकः हीति "एकमेवाद्वितीयम्" इत्यादि श्रुतिप्रसिद्धिं द्योतयति ननु तथा लिंगदेहोप्यस्तीति चेन्नेत्याह देह इति देहो लिंगदेहः सूक्ष्मशरीरमिति यावत् सबहुभिः

कलाभिः श्रोत्रादिबुद्ध्यंताभिः सप्तदशभिरावृत आच्छादितस्तत्संघात इत्यर्थः अतएव लिंगदेहस्य निरवयवत्वाद्यभावात् ज्ञानेन तत्कारणाऽज्ञाननिवृत्तौ निवृत्तिरन्यथाऽनिर्मोक्षप्रसंग इतिभावः एवमतिवैलक्षण्ये सत्यपि तयोरात्मदेहयोः प्रकाशतमसोरिवैक्यमैकात्म्यं प्रपश्यंति तार्किकादयइत्यर्थः अतो विपरीतदर्शनात्परमन्यदज्ञानं किमस्ति एतदेवाज्ञानमित्यर्थः विपर्ययरूपकार्यान्यथानुपपत्त्या तत्कारणं मूलाऽज्ञानं कल्प्यत इतिभावः ॥ १७ ॥

भा. टी. आत्मा विनिष्कल अर्थात् अवयवहीनहै इसी कारण एक है और देह बहुत अवयवोंसे बना है तबभी संसार बन्धनमें फँसेहुए पुरुष आत्मा और देहकी ऐक्यता कर व्यवहार करते हैं इससे अधिक और क्या अज्ञान होगा ॥ १७॥

आत्मा नियामकश्चान्तर्देहो बाह्यो नियम्यकः ॥ तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ॥ १८ ॥

सं.टी. पुनर्वैलक्षण्यमाह आत्मेति आत्मा नियामको नियंता च पुनरंतः पंचकोशांतरः देहस्तु नियम्यः सन् बाह्यः तयोरैक्यमित्युत्तरार्द्धं व्याख्यातं एवमग्रेपि ज्ञेयम् ॥ १८ ॥

भा. टी. आत्मा अन्दर स्थित है और प्रेरणा करने वाला है देह बाहर और प्रेरित है तबभी संसार बन्धनमें फँसे हुए अज्ञानी पुरुष देह और आत्मांकी समता कर व्यवहार करें- हैं इससे अधिक और क्या अज्ञान होगा ॥ १८ ॥

**आत्मा ज्ञानमयः पुण्यो देहो मांसम-योऽशुचिः ॥ तयोरैक्यं प्रपश्यन्तिकि-मज्ञानमतः परम् ॥ १९ ॥**

सं. टी. अन्यदपि वैलक्षण्यमाह आत्मेति आत्मा ज्ञानमयः प्रकाशरूपोऽतएव पुण्यः शुद्धःदेहस्तु मांसा-दिविकारवानतएवाऽशुचिः एतेनात्मनः स्थूलदेहादपि वैलक्षण्यमुक्तं भवति तयोरैक्यमित्यादि पूर्ववत् ॥ १९ ॥

भा. टी. आत्मा ज्ञानमय है पवित्रहै और देह मांस रुधिर अस्थि चर्बी इत्यादिकोंसे बनाहुआ है इसी कारण अप-वित्र है तबभी संसार बंधनमें फँसे हुए अज्ञानी पुरुष देह और आत्माकी समताकर व्यवहार करें हैं इससे अधिक और क्या अज्ञान होगा ॥ १९ ॥

**आत्मा प्रकाशकःस्वच्छो देहस्तामस उच्यते ॥ तयोरैक्यं प्रपश्यन्ति किम-ज्ञानमतःपरम् ॥ २० ॥**

सं. टी. वैलक्षण्यांतरमाह आत्मेति आत्मा स्वयंप्र-काशः सन् सूर्यादिवदन्यसर्वप्रकाशकोऽतएवस्वच्छः

प्रकाश्यगुणदोषसंबंधशून्यइत्यर्थः "असंगोह्ययं पुरुषः" इतिश्रुतेः देहस्तु तामसो घटादिवत्प्रकाश्यत्वेन जडः तयोरैक्यामत्यदि पूर्ववत् ॥ २० ॥

भा. टी. आत्मा सबका प्रकाशक ज्योतिःस्वरूपहै और स्वच्छ है ( अर्थात् जिसमें रजोगुण सतोगुण तमोगुणरूप सृष्टि मरु मरीचिका की तरह मालुम होय वास्तवमें आत्मा निर्मलहै ) और देह सदा तमोगुण करके युक्त रहेहै तबभी संसारी पुरुष देह आत्माकी समता कर व्यवहार करैं हैं इससे अधिक और क्या अज्ञान होगा ॥ २० ॥

आत्मा नित्यो हि सद्रूपो देहोऽनि-
त्योह्यसन्मय ॥ तयोरैक्यं प्रपश्य-
न्ति किमज्ञानमतःपरम् ॥ २१ ॥

सं. टी. अत्र सर्वत्रपौनरुक्त्यंनाशंकनीयमात्मनोऽलौकिकत्वेनात्यंतदुर्बोधत्वादेव बहुधा वैलक्षण्यं प्रदर्श्यंते परमकारुणिकैः श्रीमदाचार्यैः आत्मेति आत्मा नित्यो ध्वंसाप्रतियोगी तत्रहेतुः हि यस्मात्सद्रूपः अबाध्यस्वरूपःदेहस्तु ध्वंसप्रतियोगी अत्रापि हेतुः हियस्मादसन्मयोऽनित्यः विकारित्वेन बाधयोग्यइत्यर्थः यस्मादेवमात्मदेहयोरत्यतंवैलक्षण्यं तस्मात्तयोरैक्यदर्शनं केवलमज्ञानामिति ॥ २१ ॥

भा. टी. आत्मा नित्यहै अर्थात् आदि मध्य अन्त करके रहितहै, इसी कारण सद्रूप है अर्थात् सदा एकरस रहे है और देह अनित्य है अर्थात उत्पन्नहोय है, बालक होयहै, युवा होय है, वृद्धहोयहै, रोगी होयहै, सुखदुःख करके ग्रसित रहेहै और असत् है अर्थात् नाशवान् है तौभी संसारी पुरुष देह और आत्माकी समता कर व्यवहारकरे हैं इससे अधिक और क्या अज्ञान होगा ॥ २१ ॥

**आत्मनस्तत्प्रकाशत्वं यत्पदार्थाव-भासनम् ॥ नाग्न्यादिदीप्तिवद्दीप्तिर्भ-वत्यान्ध्यं यतो निशि ॥ २२ ॥**

सं. टी. नन्वात्मनः प्रकाशत्वं किं नामेत्यत आह आत्मनइति आत्मनस्तत प्रकाशत्वं बोद्धव्यं किंतदि-त्यतआह यदिति यत्पदार्थावभासनं घटपटादिवस्तुवि-षयप्रकाश इदंतया निर्दिश्यमानविषयदर्शनामिति या वत् । तर्ह्यग्न्यादिप्रकाशवद्विकारित्वं स्यादित्यतआह नाग्न्यादिदीप्तिवद्दीप्तिरिति इयमात्मदीप्तिरग्न्यादिदी-प्तिवन्न कदाचिदुत्पत्तिविनाशादिविकारवतीत्यर्थः तत्र हेतुमाह भवतीति भवत्यांध्यं यतो निशि यतःकारणा-न्निशि रात्रावग्न्यादिप्रकाश एकस्मिन्देशेसत्यपितदन्य-त्रलोकस्यांध्यं रूपग्रहाक्षमत्वं भवति नैतादृश्यात्मदी-प्तिरेकत्र विद्यमाना चैकत्राऽविद्यमाना परिच्छिन्ना चास्ति

किंतु दीपादिरूपस्याग्न्यादिप्रकाशस्य प्रकाशिका तदभावे चांधकारस्य प्रकाशिका उत्पत्तिनाशरहि-ता च सदा सर्वत्र पूर्णैवास्ति यद्वा इयमात्मदीप्तिरग्न्या-दिदीप्तिसदृशी न कुतः यतः कारणान्निशि रात्रावांध्यमं-धकारोभवत्यतद्विलक्षणाऽऽत्मदीप्तिर्ज्ञेया यद्यात्म-दीप्तिरग्न्यादिदीप्तिसदृशीभवेत्तर्ह्यग्न्यादिदीप्त्या यथां-धकारस्य नाशोभवति तथात्मदीप्त्याऽप्यंधकारस्य ना शः स्यात् परंत्वात्मनः सत्ताप्रकाशाभ्यां सर्वत्र सर्वदा विद्यमानत्वेऽप्यंधकारस्य नाशो नभवत्यतआत्मदीप्ति-रग्न्यादिदीप्तिसदृशी न किंतु इयमग्न्यादिदीप्तिर्भातीद मांध्यंभातीत्याद्याकारेणाऽग्न्यादिदीप्तेरांध्यस्य चान्य-स्य सर्वस्य च प्रकाशिका चाविरोधिन्यात्मदीप्तिः स्वप्र-काशैवाभ्युपेतव्या सर्वैरात्मज्ञानारूढैरित्यर्थः तस्मा-दग्न्यादिदीप्तीनामपि दीपिकाऽन्यसाधननिरपेक्षायादी-प्तिः स आत्मप्रकाश इतिभावः ॥ २२ ॥

भा. टी. जिस प्रकार घटपटादि पदार्थ प्रकाश होय हैं तिसी प्रकार आत्माका प्रकाश होयहै सूर्य्य चन्द्र अग्निके प्रकाशकी तरह आत्माका प्रकाशविकारको नही प्राप्त होय है क्योंकि जब रात्रिमें सूर्य्यादिकका प्रकाश नहीं होयहै तब अन्धकार होय है इससे जानाजायहै कि अग्नि आदिका प्रकाश विकारको प्राप्त होय है किन्तु आत्माका प्रकाश

भी विकारको नहीं प्राप्त होयहै अर्थात् आत्माका प्रकाश सदा सब जगह रहेहै ॥ २२ ॥

**देहोऽहमित्ययं मूढो धृत्वातिष्ठत्यहो जनः ॥ ममायमित्यपि ज्ञात्वा घटद्रष्टेव सर्वदा ॥ २३ ॥**

सं. टी. तदेवं प्रकाश्य प्रकाशकत्वादिलक्षणवैलक्षण्येसत्यपि आत्मानात्माभेददर्शिनमुपसंहरन्नुभयोर्भेदं स्पष्टयति देहइति अहमहंशब्दप्रत्ययालंबनः प्रत्यगात्माऽयमिदंतयानिर्दिश्यमानो घटादिवत्प्रत्यक्षतयादृश्यमानोदेहोस्मीतिउभयोर्द्रष्टृदृश्ययोरैक्यंकृत्वा मूढः स्वाज्ञानकार्यविपर्ययमोहव्याप्तोजनस्तिष्ठति कृतकृत्य बुद्ध्या निर्व्यापारोभवतीत्यर्थः एतदहो महदज्ञानमितिभावः किंकृत्वापीत्यत आह ममेति मम मत्संबंधी अयं देह इति सामान्यतो भेदं ज्ञात्वापि अतएवाश्चर्यमिति तात्पर्यं कइव, सर्वदा घटद्रष्टेव यथा सर्वकाले घटद्रष्टा पुरुषो ममायं घट इति जानाति नत्वहं घट इति कदाचिदपि जानातीत्यर्थः ॥ २३ ॥

भा. टी. मनुष्यके पास एक घडा होयहै तब 'मेराघडा है' ऐसा व्यवहार करै है मैं घट हूं ऐसा व्यवहार नहीं करै किन्तु यह देह मेरा है मैं हूं ऐसा संसारी पुरुष ज्ञान करैहै परन्तु वास्तवमें अज्ञानहै ॥ २३ ॥

ब्रह्मैवाहं समः शान्तः सच्चिदानन्दल-
क्षणः ॥ नाहं देहो ह्यसद्रूपो ज्ञानमि-
त्युच्यते बुधैः ॥ २४ ॥

सं. टी. नन्वेतस्मिंस्तद्बुद्धिरिति लक्षणभ्रमापरपर्यायमोहकार्यलिंगानुमेयमज्ञानमीदृक् तर्हि तन्निवर्तकं किमित्याकांक्षायां तद्विरोधित्वादात्मज्ञानमेवात्माऽज्ञाननिवर्तकमित्यभिप्रेत्य तल्लक्षणमाह ब्रह्मेत्यादिपंचभिः । अहमहंशब्दप्रत्ययालंबनः प्रत्यगात्मा ब्रह्मैवास्मि एतयोस्तत्त्वंपदार्थयोरैक्ये हेतुगर्भितानि विशेषणान्याह सम इति समः सत्ताप्रकाशाभ्यां सर्वाभिन्नः पुनः किंलक्षणः शांतः निरस्तसमस्तोपाधित्वाद्विक्षेपादिविकारशून्यः पुनः किंलक्षणः सच्चिदानंदलक्षणः । सच्चिदानंदैरनृतजडदुःखप्रतियोगिभिर्लक्ष्यते विरुद्धांशत्यागरूपया भागलक्षणया ज्ञायत इति सच्चिदानंदलक्षणः । ब्रह्मबोधे हि द्विविधं द्वारं विधिर्निषेधश्चेति तत्र सत्यज्ञानादिसाक्षाद्वाचकशब्दप्रयोगलक्षणो विधिरुक्तः । इदानीमतन्निरसनलक्षणो निषेधः प्रदर्श्यते नाहमिति अहमहंशब्दप्रत्ययालंबन आत्मा देहो नेत्वन्वयः देह इत्युपलक्षणं प्राणेंद्रियादीनामपि हीति विद्वज्जनप्रसिद्धं देहादेरनात्मत्वेहेतुमाह असदिति । असद्रूपोसद्बाध्यमनृतं तादृग्रूपं स्वरूपं यस्य स तथाविध

इत्येवंप्रकारम् "अहं ब्रह्मास्मि" इत्यादिमहावाक्यजन्याऽखंडाकारबुद्धिरूपं ज्ञानं बुधैरात्मतत्त्वज्ञैरुच्यते कथ्यत इत्यर्थः। एतद्विलक्षणः सर्वोऽज्ञानाभास इतिभावः॥२४॥

भा. टी. मैं सम अर्थात् सर्वमय प्रकाशद्वाराहूँ । और शान्तहूँ अर्थात् निर्विकारहूँ त्रिकाल मैं विद्यमान चैतन्यस्वरूप आनन्दमयस्वरूप ब्रह्म हूँ। नाशवान् देह मैं नहीं हूं इस प्रकार ज्ञानको पण्डित जन तत्वज्ञान कहैं हैं ॥ २४ ॥

निर्विकारो निराकारो निरवद्योऽहमव्ययः ॥ नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २५ ॥

सं. टी. नन्वहं जातो मृतःसुखीदुःखीत्याद्यनेकाविकारत्वेनाहंशब्दप्रत्ययालंबनस्य प्रतीयमानत्वात् कथं तस्य ब्रह्मत्वमित्यत आह निर्विकार इति अहमहंशब्दप्रत्ययालंबनः प्रत्यगात्मा निर्विकारोस्मीति शेषः निर्गता विकारजन्मादयो यस्मात् स तथाविधः तेषां देहधर्मत्वादिति भावः । तत्र हेतुः निराकारः देहाद्याकाररहितः अत एव निरवद्यो वातपित्तादिजन्याध्यात्मिकादितापत्रयरहितइत्यर्थः। अत एवाऽव्ययः अपक्षयादिरहित इत्यर्थः अहं मनुष्य इत्यादिप्रतीतेः । कथं निर्विकारत्वमिति चेत्सा प्रतीतिः शुक्तिरजतादिवद्वाध्यत्वाद्भ्रांतिरित्याह नाहमिति । नाहमित्युत्तरार्द्धं व्याख्यातं पूर्वश्लोके

एवमुत्तरत्रापि ज्ञेयं पुनरुक्तिस्तु ज्ञानप्रतिबंधकस्य बुद्धिमांद्यविपर्ययादेर्दार्ढ्यान्नाशंकनीया ॥ २५ ॥

भा. टी. मैं निर्विकारहूं अर्थात् सदा एकरूपहूं । निराकार अर्थात् मेरा कोई आकार नहीं है । मैं निरवद्यहूं अर्थात् आध्यात्मिक आधिदैविक आधिभौतिक इन तीन तापों करकै रहितहूं और अविनाशीहूं । नाशवान् देह नहीं हूं । इस प्रकार ज्ञानको पण्डितगण तत्त्वज्ञान कहैं हैं ॥ २५ ॥

निरामयो निराभासो निर्विकल्पोऽहमाततः ॥ नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २६ ॥

सं. टी. पुनः किंलक्षणं ज्ञानमित्यत आह निरामय इति। अहं निरामयः सर्वरोगरहितः निराभासो वृत्तिव्याप्यत्वेपि फलव्याप्यत्वशून्यः निर्विकल्पः कल्पनाहीनः आततश्च व्यापकः ॥ २६ ॥

भा. टी. मैं रोगहीनहूं अर्थात् मुझै राजयक्ष्मादिरोग नहीं होयहैं मुझै फलकी अभिलाषा नहीं होयहै मैं कल्पना नहीं करूंहूं और सर्वव्यापीहूं । मैं नाशवान् देह नहींहूं इस प्रकार ज्ञानको पण्डित जन तत्त्वज्ञान कहैं हैं ॥ २६ ॥

निर्गुणो निष्क्रियो नित्यो नित्यमुक्तोऽहमच्युतः॥ नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २७ ॥

सं. टी. पुनः किंलक्षणं ज्ञानमित्यत आह निर्गुण इति । अहं निर्गुणो गुणरहितः गुणानां मायामयत्वादित्यर्थः अत एव निष्क्रियः क्रियारहितः तथा नित्यो विनाशरहितः अत एव नित्यमुक्तः कालत्रयेपि बंधशून्यः तत्र हेतुः अच्युतः अप्रच्युतसच्चिदानंदस्वभावः ॥२७॥

भा. टी. मैं रजोगुण सतोगुण तमोगुणरूप तीन गुणों करके रहितहूं क्रिया करके रहितहूं नित्यहूं नित्यमुक्तहूं अर्थात सर्वदाही बन्धशून्यहूं अच्युतहूं अर्थात् सदा ज्ञानमयहूं मैं नाशवान् देह नहींहूं इस प्रकार ज्ञानको पण्डित जन तत्वज्ञान कहैं हैं ॥ २७ ॥

**निर्मलो निश्चलोऽनन्तः शुद्धोऽहमजरोऽमरः ॥ नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ २८ ॥**

सं. टी. पुनरपि ज्ञानलक्षणमाह निर्मल इति । अहं निर्मलः अविद्यातत्कार्यलक्षणमलरहितः अत एव निश्चलः व्यापकत्वादाकाशवन्निश्चल इत्यर्थः निश्चलत्वे हेतुः अनंतः देशकालवस्तुपरिच्छेदशून्यः शुद्धः अशुद्धिरहितः पुनरजरः जरारहितः अमरो मरणरहितश्च सर्वधर्माणां देहत्रयवर्तित्वादिति भावः ॥ २८ ॥

भा. टी. मैं निर्मल अर्थात् सर्वदोषों करकै रहितहूं और निश्चलहूं अर्थात् चलायमान नहीं होऊंहूं अनन्तहूं

अर्थात् मेरा अन्त नहीं है और शुद्धहूं और अजरहूं अर्थात् बूढा नहीं होऊंहूं और अमर हूं अर्थात् मेरी कभी मृत्यु नहीं होयहै नाशवान् देह नहींहूं ऐसा जो ज्ञानहै उसको पण्डितजन तत्त्वज्ञान कहैं हैं ॥ २८ ॥

**स्वदेहे शोभनं संतं पुरुषाख्यं च सम-तम् ॥ किं मूर्ख शून्यमात्मानं देहा-तीतं करोषि भोः ॥ २९ ॥**

सं. टी. नन्वात्मा प्रत्यक्षदेहरूपो न भवति तर्हि शून्यत्वमात्मनः स्यादित्याशंक्याह स्वदेहे इति । भो हे मूर्ख शून्यवादिन् स्वदेहे पुरुषाख्यं पुरि मनुष्यशरीरे उषति अहमाकारेण वसतीति पुरुष इत्याख्या नाम य-स्य तं अतएवशोभनं मंगलं शरीरविलक्षणत्वादतिमंगलं तथा संमतम् "अयमात्मा ब्रह्म" इत्यादिवाक्यनिर्णीतं चकारात् "उत्तमः पुरुषस्त्वन्यः" इत्यादि स्मृतिनि र्णीतं घटद्रष्टृवद्देहद्रष्टृत्वेन देहातीतमात्मानं सततं भाव संतं सर्वव्यवहाराधिष्ठानं शून्यं खपुष्पादिवत् अत्यंता-ऽभावरूपं किंकरोषि कथं मन्यसे मामन्यथा इति भावः। क्वचित् स्वदेहमिति द्वितीयांतः पाठस्तस्मिन् पक्षे देहात्मवाद्येव वदति उक्तलक्षणं मनुष्यदेहं त्यक्त्वा समानमन्यत् ॥ २९ ॥

भा. टी. हे संसारी मूढ! तू अपने देहमें विद्यमान मङ्गलमय

ब्रह्मरूप निर्णय किये हुए देहातीत आत्माको शून्य ज्ञान करे है ॥ २९ ॥

स्वात्मानं शृणु मूर्ख त्वं श्रुत्या युक्त्या च पूरुषम् ॥ देहातीतं सदाकारं सुदुर्दर्शं भवादृशैः ॥ ३० ॥

सं. टी. ननु शून्यवादिन एवाभावापत्तेः शून्यं मास्तु परंत्वात्मनो देहातीतत्वे प्रमाणाभावादेह एवात्मा स्यादित्याशंक्याह स्वात्मानमिति । भो मूर्ख देहात्मवादिन् चार्वाक त्वं स्वात्मनं स्वकीयमात्मानं पुरुषं देहातीतं देहातिरिक्तं श्रुत्या "तस्माद्वा एतस्मादन्नरसमयादन्योंतर आत्मा"इत्यादिकया पुनर्युक्त्याच एकस्मिन्कर्तृकर्मविरोधइत्यादिरूपया शृणु अवधारय देहातीतत्वे किमाकार आत्मेत्यत आह सदाकारमिति । सदाकारमस्तीत्येतन्मात्रव्यवहारकारणभूत आकारो यस्य तं एवंविधोस्ति चेत्कुतो न दृश्यत इत्यत आह सुदुर्दर्शमिति भवादृशैः श्रुत्याचार्यश्रद्धाशून्यैः सुदुर्दर्शं सर्वथा दर्शनायोग्यं तस्यादृष्टरूपत्वादेवेत्यर्थः यद्वा पूर्वश्लोकोक्तद्वितीयापेक्षया देहात्मवादिनः समाधानार्थोयं श्लोकः स्वात्मानमिति ॥ ३० ॥

भा. टी. युक्तियों करकै और श्रुतियों करकै आत्माको देहातीत निर्णय तौ कर । हे मूढ ! आत्मा तौ सदाकारहै

'आत्मा' है इसप्रकार व्यवहारके कारण आत्माका आकारभान होयहै परन्तु तुमसे मूर्खोंके दृष्टिगोचर नहीं होय है ॥ ३० ॥

**अहंशब्देन विख्यात एक एव स्थितः परः॥ स्थूलस्त्वनेकतां प्राप्तः कथं स्या-देहकः पुमान् ॥ ३१ ॥**

सं.टी. तदेवाह अहमित्यादिसप्तभिः। परः देहादन्य आत्माऽहंशब्देन शब्द इत्युपलक्षणं प्रत्ययस्यापि वि-ख्यातः प्रसिद्धः किंलक्षण इत्यत आह एकइति एक एव स्थित एवेति प्रत्येकमवधारणं तुशब्दः पूर्वोक्तादात्मनः स्थूलदेहस्य वैलक्षण्यद्योतकः।स्थूलो देहकः देहएव देह-कः स्वार्थे कः प्रत्ययः कथं पुमान् पुरुषः आत्मा स्यान्न कथंचिदित्यर्थः देहस्यानात्मत्वे हेतुमाह.अनेकतामिति अनेकतां परस्परं भिन्नतां प्राप्तः एवं, तमःप्रकाशवदति विलक्षणत्वेपि देहस्यात्मत्वं ब्रुवन्नातिमूढत्वादुपेक्ष्य इति भावः॥ ३१ ॥

भा. टी. अहं शब्द करकै कहाजायहै और एकहै और सबसे उत्कृष्टहै तब किसप्रकार स्थूल अनेकताको प्राप्त देहमय होसकै है ॥ ३१ ॥

**अहं द्रष्टृतया सिद्धो देहो दृश्यतया स्थितः ॥ ममायमितिनिर्देशात्कथं स्याद्देहकः पुमान् ॥ ३२ ॥**

सं.टी.तदेवातिवैलक्षण्यं दर्शयति अहमिति । अह-महंशब्दप्रत्ययालंबन आत्मा द्रष्टतया शब्दादिविषयप्र-काशकतया सिद्धः शब्दंशृणोमीत्यादिव्यवहारेण प्र-सिद्धः देहस्तु दृश्यतया शब्दादिवत्प्रकाश्यतया स्थितः तत्र हेतुमाह ममेति ममायं देह इति घटादिवत्स्वीय-संबंधितया निर्देशात् व्यवहारात् एवमुभयोर्वैलक्षण्ये सति कथं देहकः पुमान् स्यादिति व्याख्यातार्थश्चतुर्थ-पादः एवमग्रेपि बोद्धव्यम् ॥ ३२ ॥

भा. टी. यह मेरा है इस प्रकार निर्देश करनेसे आत्मा द्रष्टा ( देखने वाला ) देह दृश्य ( देखने लायक ) है.इसप्रकार प्रतीत होयहै । फिर आत्मा किसप्रकार देहमय हो सके है ॥ ३२ ॥

अहं विकारहीनस्तु देहो नित्यं विकार वान्॥इति प्रतीयते साक्षात्कथं० ॥३३॥

सं.टी. पुनर्वैलक्षण्यांतरमाह अहमिति अहं व्याख्या तार्थः विकारहीनः जायतेस्तीत्यादिषड्विकारहीनः तुवै-लक्षण्ये देहो नित्यं सर्वकालं विकारवान् अत्रकिंप्रमाण-मत आह इतीति इति साक्षात् प्रत्यक्षप्रमाणेन प्रतीयते अनुभूयते एवं सतिकथं स्याद्देहकः पुमानिति ॥ ३३ ॥

भा. टी. आत्मा विकाररहित है और देह सदा विकार-वान् है ऐसा साक्षात् प्रतीत होय है फिर किस प्रकार आत्मा देहमय होसकै है ॥ ३३ ॥

यस्मात्परमिति श्रुत्या तयापुरुषलक्ष-
णम् ॥ विनिर्णीतं विमूढेन कथं०॥ ३४॥

सं.टी.एवं युक्त्या देहात्मनोर्वैलक्षण्यमुक्त्वा श्रुत्या-प्याह यस्मादिति। "यस्मात्परं नापरमस्ति किंचिद्यस्मा-न्नाणीयो नज्यायोस्तिकश्चित्। वृक्षइव स्तब्धो दिवि ति-ष्ठत्येकस्तेनेदं पूर्णंपुरुषेण सर्वम्" इति तया प्रसिद्धया तैत्तिरीयश्रुत्याकृत्वेति करणे तृतीया पुरुषस्यात्मनो ल-क्षणं विमूढेन विगतमूढभावेनातिचतुरेण श्रुत्यर्थविवेच-नकुशलेनेत्यर्थः इयं कर्तरितृतीया विनिर्णीतं विचार्य स्थापितं अन्यत्पूर्ववत् यद्वा श्रुत्येति कर्तृपदमस्मिन्प-क्षे विमूढेनेति देहात्मवादिनं प्रति संबोधनं विमूढानां इन स्वामिन् मूर्खशिरोमणित्वादेव श्रुतिं नाद्रियस इ-तिभावः ॥ ३४ ॥

भा. टी. " यस्मापरं नापरमस्ति किञ्चित् यस्मान्नाणीयो नज्यायोऽस्तिकश्चित । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्"इति श्रुतिः । अर्थात् जिससे पर अपर कुछ नहीं है जिससे और उत्कृष्ट नहीं है जिससे कोई सक्ष्म नहीं है जिससे कोई प्रधान नहीं है जो एक आत्मा वृक्षकी तरह स्तब्ध होकर स्वर्गमें वर्तमान है वही आत्मा इस सम्पूर्ण जगत्को परिपूर्ण रखताहै । इस श्रुतिसे परमात्माका लक्षण निर्णयकिया गया है फिर वह आत्मा किस प्रकार देहमय होसक्ताहै॥ ३४॥

**सर्वंपुरुषएवेति सूक्ते पुरुषसंज्ञिते॥ अ-**
**प्युच्यते यतः श्रुत्या कथं० ॥ ३५ ॥**

सं. टी. नकेवलमनयैकया श्रुत्या विनिर्णीतं किंत्व-न्ययापीत्याह सर्वमिति। यतो हेतोः श्रुत्या वेदाख्यपरदे-वतया 'पुरुषएवेदंसर्वम्' इति पुरुषसंज्ञिते सूक्तेप्युच्यते पुरुषलक्षणमिति पूर्वश्लोकादध्याहारः अतः कथं स्या-दितिपूर्ववत् ॥ ३५ ॥

भा. टी. "पुरुष-एवेदं सर्वं यद्भूतं यच्च भाव्यम्" इति श्रुतिः। जो कुछ दृष्टिगोचर होयहै सो सब आत्मस्वरूपहै और जो कुछ हुआ और जो कुछ होयगा सर्व आत्मस्वरूप है। इस श्रुतिसे कहा हुआ परमात्मा देहमय किस प्रकार होसकै है ३५

**असंगः पुरुषः प्रोक्तो बृहदारण्यके**
**ऽपिच॥अनंतमलसंश्लिष्टःकथं०॥३६॥**

सं.टी.अपरयापि श्रुत्यैवमेव निर्णीतमित्याह असंग-इति। "असंगो ह्ययं पुरुषः" इति श्रुत्या बृहदारण्यके वाजसनेयोपनिषदि पुरुषः असंगः प्रोक्तः देहकस्त्वनं-तमलसंश्लिष्टः कथं पुमान्स्यादिति ॥ ३६ ॥

भा. टी. "असंयोगोयंपुरुषः" आत्मा सङ्गहीन है यह बृह दारण्यक उपनिषद्की श्रुति है इस श्रुतिसेभी आत्मा असंग सिद्ध होताहै और देह नानाप्रकारके मलोंकरकै लिपटा हुआ फिर किसप्रकार आत्मा देहमय होसकै है ॥ ३६ ॥

**तत्रैव च समाख्यातः स्वयंज्योतिर्हि पू-**
**रुषः ॥ जडः परप्रकाश्योसौ कथं० ३७॥**

सं. टी.तत्रैवान्यप्रकारेणापि देहात्मनोर्वैलक्षण्यं नि-रूपितमित्याह तत्रैवेति । तत्रैव बृहदारण्यक एवेत्यर्थः अत्रायं पुरुषः स्वयंज्योतिर्भवतीति श्रुत्या स्वयंज्योतिः पुरुषः समाख्यातः हीति विद्वत्प्रसिद्धिं द्योतयति असौ घटादिवद्दृश्योऽत एव परप्रकाश्यस्तत एव जडो देहकः कथं पुमान् स्यादिति व्याख्यातम् ॥ ३७ ॥

भा. टी. "पूरुषोज्योतिर्मयः" पुरुष स्वयंप्रकाश ज्योति-स्वरूपहै यह श्रुति उसी बृहदारण्यक उपनिषद्में लिखीहै इससे आत्मा तौ ज्योतिःस्वरूपहै और देह जड़है घटादिकोंकी तरह परप्रकाश्यहै फिर किसप्रकार आत्मा देहमय हो सके है ॥ ३७ ॥

**प्रोक्तोऽपि कर्मकांडेन ह्यात्मा देहाद्वि-**
**लक्षणः ॥ नित्यश्च तत्फलं भुंक्ते देहपा-**
**तादनंतरम् ॥ ३८ ॥**

सं.टी.अथास्तामिदं ज्ञानकांडं कर्मकांडेपिदेहात्मनो र्भेद एवनिर्णीत इत्याहप्रोक्तइति।हियस्मात्कर्मकांडेनापि " यावज्जीवमग्निहोत्रं जुहुयात् " इत्यादिरूपेण कर्मप्र-तिपादकेन वेदभागेनेत्यर्थः आत्मा देहाद्विलक्षणः प्रोक्तः कथमित्यतआह नित्य इति नित्यत्वं च कुतइत्यतआह

तदिति देहपातादनंतरं तत्फलमनित्यं कर्मफलं यत आत्मा भुंक्तेऽतो नित्य इत्यर्थः चकारात् न्यायसांख्या दावप्येवमेव देहात्मनोर्भेदो वर्णित इति दर्शितम् ॥३८॥

भा. टी. "यावज्जीवमग्निहोत्रं जुहुयात्" "अहरहः सन्ध्या मुपासीत" । जबतक जिये अग्निहोत्र करै । प्रतिदिन सन्ध्या करै । इत्यादि कर्मकाण्डमेंभी आत्मा देहसे अलग नित्य देहपात होनेके अनन्तर कर्मोंके फलोंका भोगनेवाला कहाहै इसप्रकारभी आत्मा देहातीतसा प्रतीत होयहै ॥ ३८ ॥

**लिंगं चानेकसंयुक्तं चलं दृश्यं विकारि च ॥ अव्यापकमसद्रूपं तत्कथं स्यात्पुमानयम् ॥ ३९ ॥**

सं.टी. नन्वेवंसति वेदांतिनामपसिद्धांतःस्यादित्यत आह लिंगमिति । लिंगं लिंगशरीरं तत्परोक्षादिधर्मवि-शिष्टं अयं नित्यापरोक्षस्वभावः पुमान् कथं स्यान्नकथं-चिदित्यर्थः चकारात्कारणशरीरमपि निराकृतं अनयो-रपिभेदे लिंगदेहस्य वैलक्षण्यसूचकानि विशेषणान्याह अनेकेति अनेकसंयुक्तं देवमनुष्यादिनानास्थूलशरी-रसंबंधयुक्तं यद्वा श्रोत्रादिबुद्ध्यंतसप्तदशकलासंयुक्तं तथा चलं चंचलं मनःप्रधानत्वादित्यर्थः पुनर्दृश्यं ममेदं श्रोत्रं ममेदं मन इत्यादिममतास्पदत्वेनात्मन उपस-र्जनभूतं च पुनर्विकारि उपचयादिमत् अव्यापकं परि-

च्छिन्नमसद्रूपमात्मज्ञानकबोध्यं च अत्रेदमाकूतं यद्यपि लिंगशरीराध्यासे नात्मनः कर्तृत्वभोक्तृत्वादिभावस्त-थाप्यात्मनः स्वतस्तदभावज्ञानेनाऽध्यासनिवृत्तावक-र्तृत्वाभोक्तृत्वादिभावसिद्धिरिति वेदांतिनां न किंचि दपसिद्धांतोऽन्यवदिति मंगलम् ॥ ३९ ॥

भा. टी. लिङ्ग और कारण इन दोप्रकारका शरीर नाना प्रकारके शरीरोंके सम्बन्ध करकै युक्त चञ्चल विकारी एक-देशमें रहनेवाला और असत्स्वरूप है फिर किसप्रकार देह मय आत्मा होसकै है ॥ ३९ ॥

एवं देहद्वयादन्य आत्मा पुरुषई-श्वरः ॥ सर्वात्मा सर्वरूपश्च सर्वातीतो हमव्ययः ॥ ४० ॥

सं.टी. इदानीं पूर्वोक्तमर्थमुपसंहरति एवमिति । एवं पूर्वोक्तप्रकारेण देहद्वयात् स्थूलसूक्ष्मलक्षणादन्यो भिन्न आत्मा कोऽसावित्यत आह पुरुष इति पुरुषः शरी राधिष्ठाता तर्हि किं जीवः नेत्याह ईश्वर इति तत्र हेतुः सर्वात्मेति तर्ह्यद्वैतहानिः स्यादित्यत आह सर्वरूप इति एवंसति विकारित्वं स्यादित्यतआह सर्वातीत इति एता-दृश आत्माचेदस्ति तर्हि कुतो नोपलभ्यत इत्यतआह अहमिति अहंप्रत्यक्षोऽहंशब्दप्रत्ययालंबनत्वेन सर्वदो पलब्धिस्वरूप इत्यर्थः तर्ह्यहंकारः स्यान्नेत्याह अव्यय

इति अव्ययः अपक्षयादिविकारशून्यः अहंकारसाक्षीति भावः ॥ ४० ॥

भा. टी. इसप्रकार आत्मा स्थूल और सूक्ष्म दोनों प्रकारके देहोंसे अलगहै और ईश्वर है सर्वव्यापक है सर्वरूप है सर्वसे अतीतहै ( अर्थात् जिससे परे और कोई नहीं है सबसे श्रेष्ठ है ) अहम्शब्द करके कहा जाय है भूत भविष्यत वर्तमान तीनों कालमें एकरस है ॥ ४० ॥

इत्यात्मदेहभागेन प्रपंचस्यैव सत्यता ॥ यथोक्ता तर्कशास्त्रेण ततः किंपुरुषार्थता ॥ ४१ ॥

सं.टी. अथेदानीमात्मनो देहद्वयातिरिक्तत्वप्रतिपादनमनर्थकमिति शंकते इतीति । इति पूर्वोक्तप्रकारेण वर्णितेनात्मदेहविभागेन प्रपंचस्यैव सत्यता तथोक्ता यथा तर्कशास्त्रेण ततः प्रपंचसत्यत्वप्रतिपादनात्किंपुरुषार्थता कुत्सितपुरुषार्थत्वं भयनिवृत्त्यभावादित्यर्थः "द्वितीयाद्वै भयं भवति" इति श्रुतेः ॥ ४१ ॥

भा. टी. तर्कशास्त्र अर्थात् न्याय शास्त्रके माननेवालोंने इस आत्मा और देहमें भेदबुद्धिकरके न्याय शास्त्रमें जो प्रपञ्चकी सत्यता कही है ( अर्थात् परमाणुको नित्य मानकर ईश्वरको निमित्तकारण संसारकी उत्पत्ति मानी है ) उसको

स्वीकार करते हैं तिसकी अपेक्षा और पुरुषार्थता क्या होगी ॥ ४१ ॥

**इत्यात्मदेहभेदेन देहात्मत्वं निवारितम्॥इदानीं देहभेदस्य ह्यसत्त्वं स्फुटमुच्यते ॥ ४२ ॥**

सं. टी. भेदज्ञानस्याभेदज्ञानंप्रति कारणत्वादात्म देहविभागकथनं नानर्थकमित्याह इतीति । इति पूर्वोक्तेनात्मदेहभेदेनात्मनो देहात्पृथक्करणेन देहस्यैव प्राप्तं चार्वाकमतेनात्मत्वं तन्निवारितं इदानीमुत्तरग्रंथेन तस्य देहभेदस्यासत्त्वमात्मसत्तातिरिक्तसत्ताराहित्यं स्फुटं स्पष्टं यथास्यात्तथा हीतिप्रसिद्धमुच्यते ॥ ४२ ॥

भा. टी. इस प्रकार नैय्यायिकोंने आत्माका और देहका भेद दिखाकर देहको आत्मत्व निवारण किया है । सो अब देह आत्माके भेद असत्ता स्पष्ट दिखामैं है ॥ ४२ ॥

**चैतन्यस्यैकरूपत्वाद्भेदो युक्तो न कर्हिचित् ॥ जीवत्वं च मृषा ज्ञेयं रज्जौ सर्पग्रहो यथा ॥ ४३ ॥**

सं. टी. तदेवाह चैतन्यस्येति।चैतन्यस्य सर्वभूतभौतिकप्रपंचाधिष्ठानप्रकाशस्य घटःप्रकाशते पटः प्रकाशते इत्यादिष्वेकरूपत्वादेकाकारत्वाद्धेतोः कर्हिचित्क-

स्यांचिदवस्थायामपि भेदो नयुक्तो नयथार्थइत्यर्थः त-र्हिंजिवभेदःसत्यः स्यादित्यत आह जीवत्वमिति जीवत्वं चकारोप्यर्थः मृषा मिथ्या ज्ञेयं तदुपाधेरेवांतःकरणादे-र्मायामयत्वादित्यर्थः । अधिष्ठानसत्यत्वेन कल्पितस्य मिथ्यात्वबोधे दृष्टांतमाह रज्जाविति यथारज्जौ तदज्ञा नात् वक्रतादिसादृश्येन मंदांधकारे सर्पग्रहः सर्पबु-द्धिरव्युत्पन्नस्य भवति न तु व्युत्पन्नस्य तथैवात्मन्या त्माज्ञानात् प्रकाशसादृश्यादविशेषप्रकाशे चिज्जडग्रं थिरूपचिदाभासभ्रमो भवत्यविवेकिनां न तु विवेकिना मिति वेदांतसिद्धांतरहस्यम् ॥ ४३ ॥

भा, टी. चैतन्यको (भूत भौतिक प्रपञ्चका जो आधान है उसको चैतन्य कहते हैं ) एकरूप होनेसे और आत्माको चैतन्यस्वरूप होनेसे देह और आत्माका भेद कभीभी युक्ति युक्त नहीं है जिसतरह रज्जुमें वह सर्पका भ्रम होय है वास्तव में वह सर्प नहीं होय है तिसीप्रकार आत्मासे भिन्न जीवका मानना वृथा है ॥ ४३ ॥

**रज्ज्वज्ञानात् क्षणेनैव यद्वद्रज्जुर्हि स-र्पिणी ॥ भाति तद्वच्चितिः साक्षाद्वि-श्वाकारेण केवला ॥ ४४ ॥**

सं.टी. इदानीं पूर्वोक्तमेव दृष्टांतं विवृण्वन् सर्वस्यापि प्रपंचस्य ब्रह्मरूपतामाह रज्ज्विति। केवलेति विशेषणेन

पूर्वावस्थामपरित्यज्यावस्थांतरप्राप्तिलक्षणविवर्तोपादान त्वमेवोक्तं नारंभोपादानत्वं नापि परिणामोपादानत्व मिति बोध्यं अन्यत् स्पष्टम् ॥ ४४ ॥

भा. टी. जिस समय रज्जुके स्वरूपका अज्ञान होय है (अर्थात् यह रज्जुहै जब ऐसा ज्ञान नहीं होयहै ) तब रज्जुमें भ्रान्ति होयहै ( अर्थात् अज्ञानसे रज्जुको सर्प समझै है) इसी प्रकार जिससमयपर्य्यन्त आत्माका ज्ञान नहीं होयहै तब-तक अज्ञानवशसे आत्माके विषयमें पुरुष नाना प्रकारकी कल्पना करैहै ॥ ४४ ॥

उपादानं प्रपंचस्य ब्रह्मणोऽन्यन्न वि-
द्यते ॥ तस्मात्सर्वप्रपंचोयं ब्रह्मैवास्ति
न चेतरत् ॥ ४५ ॥

सं. टी. अत्र हेतुं दर्शयन् पूर्वोक्तमुपसंहरति उपा दानमिति । यस्मात्प्रपंचस्याकाशादिदेहांतस्य जगद्वि-स्तारस्य ब्रह्मणो मायाशबलाच्चैतन्यादन्यत्परमाणवो यद्वा प्रकृतिरुपादानं कारणविशेषो न विद्यत इति "त-स्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिश्रुतेः तस्माद्धेतोरिति स्पष्टमन्यत् ॥ ४५ ॥

भा. टी. ब्रह्मके सिवाय इस प्रपञ्चका उपादान कारण और कोई नहीं होसकैहै इसकारण सम्पूर्ण प्रपञ्च ब्रह्मही है ( अर्थात सर्व संसार ब्रह्मस्वरूप है ) और कुछ नहीं है ॥ ४५ ॥

**व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात् ॥ इति ज्ञाते परे तत्त्वे भेद- स्यावसरः कुतः ॥ ४६ ॥**

सं. टी. ननु व्याप्यव्यापकतारूपे भेदे जाग्रति सति कथं प्रपंचस्य ब्रह्मतेत्याशंक्याह व्याप्येति । व्याप्य- मांतरं व्यापकं बाह्यं तयोर्भावो मिथ्या घटाकाशादि- वत् कल्पितत्वादसन्नित्यर्थः तत्रप्रमाणमाह सर्वमिति "इदं ब्रह्मेदं क्षत्रमिति प्रकृत्येदं सर्वंयदयमात्मा" इत्यादि- श्रुतिरूपेश्वराज्ञाबलादित्यर्थः ततः किमत आह इतीति इति ज्ञाते इत्यादिसुगमम् ॥ ४६ ॥

भा. टी. "ब्रह्मैव सर्वमपरं नहि किञ्चिदस्ति" जो कुछ है आत्माहै और कुछ नहीं है ऐसा कहनेसे आत्माका व्याप्य- व्यापकभाव मिथ्या है ऐसा प्रतीयमान होता है इसप्रकार सर्वो- त्कृष्ट अर्थात् सबसे श्रेष्ठ आत्माके जाननेपर भेदका तो अव- सरही नहींहै ॥ ४६ ॥

**श्रुत्या निवारितं नूनं नानात्वं स्वमुखेन हि ॥ कथं भासो भवेदन्यः स्थिते चा- द्वयकारणे ॥ ४७ ॥**

सं. टी. ननु प्रत्यक्षेणभासमानो व्याप्यव्यापकभावः कथं मिथ्येत्याशंक्याह श्रुत्येति नूनमिति निश्चये हीति

प्रसिद्धौ श्रुत्या "नेह नानास्ति किंचन" इत्यादिरूपयेत्यर्थः। नानात्वं निवारितं तेन च नानात्वनिवारणेनाद्वयकारणेऽभिन्ननिमित्तोपादाने ब्रह्मणि स्थिते सति भासो व्याप्यव्यापकतादिप्रतिभासाः कार्यभूतोऽन्यः स्वकारणातिरिक्तः कथं भवेन्न कथं चिदित्यर्थः॥ ४७॥

भा. टी. वेदकी श्रुति साक्षात् आप जगत्का नानात्व निवारण करै है इसप्रकार ब्रह्म अद्वितीय अर्थात् कारण होनेकरकै किसप्रकार भेदज्ञान होसकै है॥ ४७॥

दोषोपि विहितः श्रुत्या मृत्योर्मृत्युं सगच्छति॥ इह पश्यति नानात्वं मायया वंचितो नरः॥ ४८॥

सं. टी. किंच भेददृष्टेर्दोषश्रवणादपि कारणादभिन्नमेव कार्यमित्याह दोषइति। "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिरूपया श्रुत्येत्यर्थः तत्र मृत्योरनंतरं मृत्युं जननमरणपरंपरामित्यर्थः स्पष्टमन्यत्॥ ४८॥

भा. टी. "मृत्योः स मृत्युमाप्नोति यइह नानेव पश्यति" अर्थात् जो संसारको नानारूप माना है उसको वारंवार जन्म मृत्यु नरक भोग करना पडैहै। इत्यादि श्रुतिद्वारा जो नानात्व प्रदर्शन करै हैं। उनको दोष होयहै ऐसाभी कहाहै।

मनुष्य मायासे वञ्चित होकर जगतके नानात्वका अनुभव करै है ॥ ४८ ॥

**ब्रह्मणः सर्वभूतानि जायंते परमात्मनः ॥ तस्मादेतानिब्रह्मैव भवंतीत्यवधारयेत् ॥ ४९ ॥**

सं.टी. तर्हि किं कुर्यादित्यत आह ब्रह्मण इति । बृहत्त्वादपरिच्छिन्नत्वाद्ब्रह्म तद्रूपात्परमात्मनः सर्वाणि भूतानि जायंते उत्पद्यंते जायंतइति स्थितिप्रलययोरप्युपलक्षणं "यतोवा इमानि भूतानि जायंते" इत्यादिश्रुतेः यस्मादेवं तस्माद्धेतोरेतानि भूतानि ब्रह्मैव भवंति सन्मात्रब्रह्मरूपाणीत्यवधारयेन्निश्चिनुयादिति ॥ ४९ ॥

भा. टी. "यतो वा इमनि भूतानि जायन्ते" इतिश्रुतिः अर्थात् जिससे प्राणी उत्पन्न होतेहैं इत्यादि श्रुतिसे समस्त प्राणी ब्रह्मसेही उत्पन्न होते हैं इसीकारण सबही ब्रह्मस्वरूप हैं ऐसा निश्चय है ॥ ४९ ॥

**ब्रह्मैवसर्व नामानि रूपाणि विविधानिच॥ कर्माण्यपि समग्राणि बिभर्तीति श्रुतिर्जगौ ॥ ५० ॥**

सं. टी. ननु नानानामरूपकर्मभेदेन विचित्राणि भूतानि कथं ब्रह्मात्मकानीत्याशंक्याह ब्रह्मैवेति "त्रयं वा इदं नाम रूपं कर्म" इति बृहदारण्यकश्रुतिर्जगौ गायंन

कृतवती स्वाधिकारिणः श्रावयामासेत्यर्थः। किमित्यत आह ब्रह्मैव सर्वनामान्याकाशादिदेहांतान् संज्ञाविशेषान् च पुनर्विविधानि रूपाण्यवकाशादिद्विपदांतान् नानाविकारविशेषान् अपिशब्दश्चार्थे रूपग्रहणं गंधादिग्रहणस्याप्युपलक्षणं समग्राणि कर्माण्याकाशप्रदानादीनि स्नानशौचादीन् क्रियाविशेषानपि बिभर्ति रज्ज्वादिकमिव सर्पादिप्रतिभासं दधात्यधिष्ठानदर्शनशून्यान् प्रति दर्शयतीत्यर्थः॥ ५०॥

भा. टी. ब्रह्मही सम्पूर्ण प्रकारके नाम और नाना प्रकारके रूप धारणकरता है और नानाप्रकारके कर्म्म धारण करताहै। ऐसा साक्षात् श्रुति कहती है॥ ५०॥

**सुवर्णाज्जायमानस्य सुवर्णत्वं च शाश्वतम्॥ ब्रह्मणो जायमानस्य ब्रह्मत्वं च तथा भवेत्॥ ५१॥**

सं. टी. अत्र लोकप्रसिद्धं दृष्टांतमाह सुवर्णेति सुगमम्॥ ५१॥

भा. टी. जिसप्रकार सुवर्णसे कटक कुण्डलादिक बनाये जाते हैं जबतक कुण्डलादि आकार रहा तबलों रहा फिर गलानेसैं सुवर्णका सुवर्णही होजाता है इसी प्रकार यह ब्रह्मसै उत्पन्न हुआ संसार जबलौं किसी आकारमें रहता है तबलौं रहता है अन्तमें आकर दूर होने पर ब्रह्मही होता है॥ ५१॥

स्वल्पमप्यंतरं कृत्वा जीवात्मपरमा-
त्मनोः ॥ यः संतिष्ठति मूढात्मा भयं
तस्याभिभाषितम् ॥ ५२ ॥

सं. टीः एवं कर्तृकर्मादिकारकघटस्यैकाधिष्ठानरू-
पत्वे सिद्धेपि भेददर्शिनो भयमाह स्वल्पेति । स्वल्पम-
प्यंतरमुपास्योपासकरूपं भेदं कृत्वा कल्पयित्वा
यस्तिष्ठति तस्य भयं भाषितम् "यदा ह्येवैष एत-
स्मिन्नुदरमंतरं कुरुते अथ तस्य भयं भवति" इत्या
दिश्रुत्येत्यर्थः ॥ ५२ ॥

भा. टी. जो पुरुष जीवात्मा और परमात्मामें कुछभी भेद
करै है और माने है वह मूढ पुरुष भयको प्राप्त होय है अर्थात
उसके चित्तको कदापि शान्ति नहीं होयहै ॥ ५२ ॥

यत्राज्ञानाद्भवेद्द्वैतमितरस्तत्रपश्यति॥
आत्मत्वेन यदा सर्वं नेतरस्तत्र चा
ण्वपि ॥ ५३ ॥

सं. टीः ननु प्रकाशतमसोरिवपरस्परविरुद्धस्वभा-
वयोर्द्वैताद्वैतयोः कुत एकाधिकरणत्वमित्याशंक्याव-
स्थाभेदादित्याह यत्रेति यत्र यस्यामज्ञानावस्थायां
अज्ञानेन द्वैतमिव भवेत्तत्रतस्यामज्ञानावस्थायाम् "इत
रोऽन्योऽन्यत्पश्यति यत्रहि द्वैतमिव भवति तादितर इ-
तरं पश्यति तादितर इतरं जिघ्रति तादितर इतरं शृणोति

तदितर इतरमभिवदति तदितर इतरं मनुते तदि-तर इतरं विजानातीति यत्र वाऽन्यदिव स्यात्तत्रान्यो-न्यत्पश्येदन्योन्यज्जिघ्रेदन्योऽन्यद्रसयेत्" इत्यादिश्रुतेः चशब्दः पूर्वोक्ताद्वैलक्षण्यं सूचयति यदा यस्मिन् ज्ञानकाले सर्वमात्मत्वेन भवेत् तत्र तास्मिन् ज्ञानकाले इतरोऽण्वपि किंचिदप्यन्यन्नपश्यति यत्रवा "अस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्" इत्या दिश्रुतेः सकार्याज्ञाननिवृत्त्या न द्वैतमिति भावः॥५३॥

भा. टी. जिस अवस्थामें अज्ञान वशसे द्वैत होयहै उसी अवस्थामें एक पदार्थ दूसरे पदार्थका दर्शन करै है जब आत्मज्ञान होजाय है तब किसीको कुछ अन्य नहीं मालूम होयहै ॥ ५३ ॥

यस्मिन्सर्वाणि भूतानि ह्यात्मत्वेन विजानतः ॥ न वै तस्य भवेन्मोहो न च शोकोऽद्वितीयतः ॥ ५४ ॥

सं. टी. ननु द्वैतादर्शने कः पुरुषार्थ इत्याशंक्य तत्प्रतिपादिकाम् "यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजा-नतः तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति श्रुतिमर्थः पठति यस्मिन्निति। यस्मिन्नवस्थाविशेषे सर्वाणि भूतान्यात्मत्वेनात्मभावेन विजानतः अपरो-क्षेण साक्षात्कुर्वतोऽधिकारिणः पुरुषस्य तस्येति षष्ठी

सप्तम्यर्थे तस्मिन्नवस्थाविशेषे वै निश्चयेन मोहो भ्रमो नभवेच्च पुनः शोको व्याकुलतापि न भवेत् उभयत्र हेतुः अद्वितीयतः तत्कारणाभावादित्यर्थः ॥ ५४ ॥

भा. टी. जिस अवस्थामें पुरुष सर्व प्रपंचको आत्मरूप मानै है उस अवस्थामें मनुष्यको अद्वैतज्ञान होनेसे शोक मोह नहीं होयहै ॥ ५४ ॥

**अयमात्मा हि ब्रह्मैव सर्वात्मकतया स्थितः ॥ इति निर्द्धारितं श्रुत्याबृहदारण्यसंस्थया ॥ ५५ ॥**

सं. टी. शोककारणद्वैताभावे प्रमाणमाह अयमिति "सवा अयमात्मा ब्रह्म विज्ञानमयः" इत्यादिरूपये त्यर्थः । शेषंस्पष्टम् ॥ ५५ ॥

भा. टी. "सवा अयमात्मा ब्रह्मविज्ञानमयः" परमात्मस्वरूप ब्रह्महो सर्वात्मकरूप स्थितहै ऐसा बृहदारण्य उपनिषद्की श्रुतिने निश्चय किया है ॥ ५५ ॥

**अनुभूतोऽप्ययंलोकोव्यवहारक्षमोऽपि सन् ॥ असद्रूपो यथास्वप्न उत्तरक्षणबाधतः ॥ ५६ ॥ स्वप्नोजागरणेऽलीकः स्वप्नेपि जागरो नहि ॥ द्वयमेव लये नास्ति लयोपि ह्युभयोर्नच ॥ ५७ ॥**

सं. टी. नन्वयंलोक एव तत्कारणे सति कथं शोका-द्यभाव उच्यत इत्याशंक्य सदृष्टांतमाह अनुभूत इति स्पष्टम् ॥ ५६ ॥ दृष्टांतं विवृण्वन्नुक्तन्यायमन्यत्राप्य-तिदिशति स्वप्न इति अलीको मिथ्या द्वयं स्वप्नजागरणे लये सुषुप्तौ शेषं स्पष्टम् ॥ ५७ ॥

भा. टी. जिस प्रकार स्वप्नावस्थामें स्वप्नमें देखाहुआ पदार्थ सम्पूर्ण सत्स्वरूप मालूम पडै है स्वप्नसे दूसरेक्षणमें जगते ही सब असत् स्वरूप हो जाय है इसी प्रकार इस संसारका व्यवहार सत्य मालूम होयहै और असत् स्वरूप होयहै जाग्रत् अवस्था में स्वप्न मिथ्या मालूम होयहै स्वप्ना अवस्थामें जाग्रत मिथ्या मालूम होय है और सुषुप्ति अवस्थामें स्वप्न जाग्रत् दोनों मिथ्या होयहैं इसी प्रकार स्वप्न और जाग्रत अवस्थामें सुषुप्ति मिथ्या प्रतीत होयहै ॥ ५६ ॥ ५७ ॥

त्रयमेवं भवेन्मिथ्या गुणत्रयविनिर्मि-तम् ॥ अस्य द्रष्टा गुणातीतो नित्यो ह्ये-कश्चिदात्मकः ॥ ५८ ॥

सं. टी. उक्तमुपसंहरन्फलितमाह त्रयमिति त्रयं जाग्रदाद्यवस्थात्रयमेव मुक्तपरस्परव्यभिचारेण मिथ्या मिथ्यात्वे हेतुः गुणेति गुणत्रयविनिर्मितं मायाकल्पित-मित्यर्थः तर्हि किंसत्यमतआह अस्येति अस्यअवस्था त्रयस्य शेषंस्पष्टम् ॥ ५८ ॥

भा. टी. सतोगुण रजोगुण तमोगुणसे बने हुए जाग्रत स्वप्न सुषुप्ति तीनो ऊपर कहे हुए प्रकारसे मिथ्या होयहैं इन तीनों अवस्थाओंका साक्षी गुणातीत अर्थात् गुणरहित चिन्मय अर्थात् चैतन्य स्वरूप सत्य है ॥ ५८ ॥

**यद्वन्मृदि घटभ्रांतिं शुक्तौ वा रजतस्थितिम् ॥ तद्वद्ब्रह्मणिजीवत्वं वीक्ष्यमाणे न पश्यति ॥ ५९ ॥**

सं. टी. नन्ववस्थात्रयं मिथ्याभवतु जीवस्तु सत्यः स्यादित्याशंक्य सदृष्टांतमुत्तरमाह यद्वादिति ब्रह्मणि वीक्ष्यमाणे आत्मत्वेन साक्षात्कृते सति जीवत्वं न पश्यतीत्यन्वयः अन्यत्स्पष्टमेव ॥ ५९ ॥

भा. टी. यदि आत्मामें गुणत्रय मिथ्या है तौ जीवही सत्य हो वहां कहे है । जिस प्रकार मृत्तिकामें घटकी भ्रान्ति है परन्तु घट नष्ट होनेपर मृत्तिकाही दृष्टिगोचर होयहै और जैसे शुक्तिमें चांदीकी भ्रान्ति होय है और जब समीपजाके देखै है तों सीपी होयहै इसी प्रकार जबतक आत्माका ज्ञान नहीं होय तब जीव है ऐसी प्रतीति होय है परंतु ब्रह्मका साक्षात्कार होनेसे जीवको नहीं देखै है ॥ ५९ ॥

**यथामृदि घटोनामकनकेकुण्डलाभिधा ॥ शुक्तौ हिरजतख्यातिर्जीवशब्दस्तथा परे ॥ ६० ॥**

सं. टी. अज्ञानावस्थायां प्रतीयमानो यो जीवब्रह्मभेदः स नाममात्र इति बहुदृष्टांतैराह यथेति रजतस्य ख्यातिराख्या नामेति यावत् परे परब्रह्मणि जीवशब्दस्तथा शेषं स्पष्टम् ॥ ६० ॥

भा. टी. अज्ञान अवस्थामें जो जीव ब्रह्मका भेद भासै है सो केवल नाममात्र होय है वस्तुतः मृत्तिका होय परन्तु घट ऐसा नाममात्र होयहै और सुवर्ण होयहै परन्तु कटक कुण्डल ऐसा नाममात्र होयहै सीपी होयहै परन्तु मायावश पुरुष रजत कहने लगे है इसी प्रकार वस्तुतः ब्रह्म होय है तबभी ब्रह्ममें जीवसंज्ञा होय है सो नाममात्र है वस्तुतः मिथ्या है ॥ ६० ॥

यथैवव्योम्निनीलत्वं यथानीरं मरुस्थले ॥ पुरुषत्वं यथास्थाणौ तद्वद्विश्वं चिदात्मनि ॥ ६१ ॥

सं. टी. न केवलं जीव एव नाममात्रः किंतु सर्वविश्वमपि ब्रह्मणि नाममात्रमित्यनेकदृष्टांतैराह यथैवेति स्पष्टम् ॥ ६१ ॥

भा. टी. केवल जीवही नाममात्र नहींहै किन्तु सम्पूर्ण विश्वही नाममात्र है जैसे आकाशमें वस्तुतः कुछ नहीं है परन्तु नीलापन मालूम होयहै और जैसे मारवाडकी भूमिमें वस्तुतः जल नहीं है परन्तु भ्रान्तीसे जल मालूम होय है और जैसे अन्धकार दोषसे रात्रिमें ठूंठ पुरुष मालूम होय है परन्तु वस्तुतः

पुरुष है नहीं इसी प्रकार यह संसार परमात्मा ब्रह्मके विषै भिन्न और सत्यसा प्रतीत होय है परन्तु वस्तुतः कुछभी नहीं है ॥ ६१ ॥

**यथैवशून्ये वैतालो गंधर्वाणांपुरंयथा ॥ यथाकाशे द्विचंद्रत्वं तद्वत्सत्ये जगत्स्थितिः ॥ ६२ ॥**

सं. टी. नाममात्रप्रपंचस्य मिथ्यात्ववासनादार्ढ्यार्थे ममेवार्थं बहुभिर्लोकप्रसिद्धदृष्टांतैःप्रपंचयति यथैवशून्य इत्यादित्रिभिः शून्ये निर्जने देशे वैतालः अकस्मादाभासमानो भूतविशेषः गंधर्वपुरस्यापि शून्याधिष्ठानत्वं ज्ञेयं गंधर्वनगरं नाम राजनगराकारो नीलपीतादिमेघरचनाविशेषः आकाशे स्पष्टमन्यत् ॥ ६२ ॥

भा. टी. जिसप्रकार निर्जन स्थानमें अकस्मात् प्रत्यक्ष होकर वैताल ( भूत विशेष ) मालूम होयहै परन्तु वस्तुतः मिथ्या होयहै और जैसे निर्जन स्थानमें नीले पीले मेघोंसे बना हुवा गन्धर्वोंका नगर मालूम होने लगै है परन्तु वहभी वस्तुतः मिथ्या होयहै और जैसे आकाशमें किसी समय किसी कारण भ्रान्तिसे दो चंद्रमा मालूम होने लगै हैं इसी प्रकार सत्यस्वरूप आत्मामें जगत सत्यसा प्रतीत होयहै वस्तुतः सत्य नहीं है ॥ ६२ ॥

**यथातरंगकल्लोलैर्जलमेवस्फुरत्यलम् ॥**

पात्ररूपेण ताम्रंहि ब्रह्मांडौघैस्तथा-त्मता ॥ ६३ ॥

सं. टी. यथा तरंगेति सुगमम् ॥ ६३ ॥

भा. टी. जिसप्रकार जलही तरङ्गरूप देखनेमें आवैहै और ताम्रही पात्राकार देखनेमें आवैहै इसीप्रकार आत्माही ब्रह्माण्डाकार होकर दृष्टिगोचर होयहै ॥ ६३ ॥

घटनाम्नायथा पृथ्वी पटनाम्नाहि तं-तवः॥जगन्नाम्नाचिदाभाति ज्ञेयं तत्तद् भावतः ॥ ६४ ॥

सं. टी. किंच घटेति तत्र पादत्रयं स्पष्टं ननु किम-नेन मिथ्यात्ववासनादार्ढ्येनेत्यत आह ज्ञेयमिति तद्-भावतो नामाभावतस्तद्ब्रह्म ज्ञेयम् "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादिश्रुतेः ॥ ६४ ॥

भा. टी. जैसे संसार मृत्तिका घटनाम करके प्रसिद्ध होय है और तन्तु पटनाम करकै प्रसिद्ध होयहै इसीप्रकार जीव नाम करकै संसारमें चिद्रूप आत्मा प्रसिद्ध होयहै सो मिथ्या है क्योंकि संसारके व्यवहारके वास्ते नाम संकेत मात्र होयहै ॥ ६४ ॥

सर्वोपि व्यवहारस्तु ब्रह्मणा क्रियते ज-नैः ॥ अज्ञानान्न विजानंति मृदेव हि घ-टादिकम् ॥ ६५ ॥

सं. टी. ननु " यत्र हि द्वैतमिव भवति " इत्यादि श्रुत्यर्थदर्शनेनावस्थात्रये विदेहमोक्षावुक्तौ ननु जीवन्मोक्ष:इत्याशंक्याह:सर्वइति सर्वोऽपि लौकिको वैदिकश्चेति शेषंस्पष्टम्,अयं भावः अज्ञाननिवृत्तिरेवं जीवन्मुक्तिर्नतु द्वैतादर्शनमिति ॥ ६५ ॥

भा. टी. लोककी जीवन्मोक्षअवस्था दिखावैं हैं क्यौं कि ("यत्र हि द्वैतमिव भवति") जिसमें ज्ञान होनेपर द्वैतकेसा व्यवहार किया जायहै वह जीवन्मोक्ष विदेह 'मोक्ष' से विलक्षण तीसरी अवस्था कहलावैहै तिस जीवन्मोक्ष अवस्थामें सब लोक परब्रह्मके नियमानुसार सब प्रकार लौकिक और वैदिक कार्य्य करै है ऐसाहै संसारी पुरुष तबभी अज्ञानवशसे कोईभी ब्रह्मको जाननेको समर्थ नहीं होयहै जैसे यद्यपि घट मृत्तिकाही है तथापि मृत्तिका कहनेको समर्थ नहीं होयहै आशय यहहै कि लोक यह नहीं जाने है कि लोकव्यवहारकेही कारण द्वैत व्यवहार किया जायहै वस्तुतः अज्ञानकी निवृत्तिका नाम ज्ञान है और लोकव्यवहारमेंभी अद्वैत व्यवहार करनेका नाम ज्ञान नहीं है ॥ ६५ ॥

कार्यकारणतानित्यमास्ते घटमृदोर्यथा ॥ तथैवश्रुतियुक्तिभ्यां प्रपंचब्रह्मणोरिह ॥ ६६ ॥

सं. टी. तत्रेहेतुं सदृष्टांतमाह कार्येति "यथा सौम्यै-

केन मृत्पिंडेन सर्वं मृन्मयं विज्ञातं स्यात्" इत्यादिश्रुतिः युक्तिस्तु कार्यकारणयोरन्यत्वे एककारणज्ञानात्सर्व-कार्यज्ञानं न स्यादित्यादि। सुगममन्यत् ॥ ६६ ॥

भा. टी. जैसे सदा घट और मृत्तिकाका कार्य्यकारण भाव देखनेमें आवैहै तिसी प्रकार श्रुतियोंसे और युक्तियोंसे प्रपञ्च अर्थात् जगत् और ब्रह्मका कार्य्य कारण भाव जाना जायहै ॥ ६६ ॥

गृह्यमाणेघटेयद्वन्मृत्तिकायातिवैबला-त् ॥ वीक्ष्यमाणेप्रपंचेपि ब्रह्मैवाभाति भासुरम् ॥ ६७ ॥

सं. टी. कार्यकारणयोरनन्यत्वमेव दृष्टांतेन स्पष्टयति गृह्यमाण इति भासुरं प्रमाणनिरपेक्षतयैव भासन-शीलं स्पष्टमन्यत् ॥ ६७ ॥

भा. टी. जैसे घटके विषयमें विचार करते करते अन्तमें मृत्तिकाही निश्चय होयहै इसीप्रकार इस संसारके विषयमें विचार करते करते विना प्रमाणोंके प्रकाशवान् ब्रह्मही प्रतीत होय है ॥ ६७ ॥

सदैवात्मा विशुद्धोस्ति ह्यशुद्धो भाति वै सदा ॥ यथैव द्विविधा रज्जुर्ज्ञानिनो ऽज्ञानिनोऽनिशम् ॥ ६८ ॥

सं. टी. ननु ब्रह्मणि भासमाने प्रपंचो न भासेतेत्या

शंक्यावस्थाभेदेनोभयमपि भासत इति सदृष्टांतमाह सदैवेति तत्रज्ञानिनः सदैवात्मा विशुद्धः अज्ञानतत्कार्यप्रपंचमलरहितत्वान्निष्प्रपंचोस्ति अज्ञानिनस्तु सदैवाशुद्धोऽस्तीति भ्रमाद्विभाति वैहीति. तत्प्रसिद्धौ उभयत्रापि दृष्टांतः यथेति यथा रज्जुर्ज्ञानिनः सर्पाभावतया निर्विषत्वेनाभयंकरी अज्ञानिनस्तु सर्परूपतया विपरीतत्वेन भयंकरीति द्विविधा भाति अयंभावः ब्रह्म यद्यपि स्वयंप्रकाशत्वेन सदा भात्येव तथापि वृत्त्यारूढत्वेन पुरुषार्थोपयोगीति ज्ञानिनः प्रतिभाति नाज्ञानिनः सूर्यदीपादिरिवचक्षुष्मदंधयोरितिदिक् ॥ ६८ ॥

भा. टी. जैसे एकहीरज्जु अज्ञानी पुरुषोंको भ्रमसे सर्प मालूम होयहै और ज्ञानवान् पुरुषोंको रज्जुही मालुम होजाय है इसीप्रकार एकही परमात्मा सर्वदा ज्ञानियोंको शुद्धस्वरूप और प्रकाशवान् मालूम होयहै और अज्ञानियोंको शुद्धस्वरूप और प्रकाशवान् नहीं मालूम होयहै वस्तुतः परमात्मा शुद्धस्वरूप और प्रकाशवान्है ॥ ६८ ॥

यथैवमृन्मयः कुंभस्तद्वद्देहोपिचिन्मयः ॥ आत्मानात्मविभागोयं मुधैवक्रियतेऽबुधैः ॥ ६९ ॥

सं. टी. नन्वात्मा यदि सदैव निष्प्रपंचत्वेन भाति तर्हि किमर्थं देहात्मभेदो वर्णित इत्याशंक्याविवेकिनो

देहव्यतिरिक्तात्मबोधार्थं विवेकिनस्तु व्यर्थं एवेति सदृष्टांतमाह यथेति तत्राऽबुधैरित्यऽकारप्रश्लेषे सुधैर्वाक्रियते अपि तु नेति काकुव्याख्यानम् अन्यत्सर्वं सुगमम्॥६९॥

भा. टी. यदि आत्मा सदा निष्प्रपञ्च भासमान होयहै तब आत्मा और देहका भेद क्यों कर दिखायाहै । ऐसी शंका होनेपर कहैं हैं । जैसे कुम्भ मृत्तिकामय होयहै तिसीप्रकार देह चैतन्यस्वरूप आत्ममय होयहै इसीकारण ज्ञानी पुरुषको तौ आत्मा और देहका भेद मिथ्याहै ॥ ६९ ॥

सर्पत्वेनयथारज्जू रजतत्वेनशुक्तिका॥
विनिर्णीताविमूढेन देहत्वेनतथात्मता॥७०॥

सं. टी. इदानीमाविवाकिनः कल्पितदेहतादात्म्यं सदृष्टांतमाह सर्पत्वेनेति ॥ ७० ॥

भा. टी. जिसप्रकार अज्ञानी पुरुष रज्जुको सर्प मानलेयहै और सीपीको चांदी मानलेयहै इसीप्रकार आत्माको देह अज्ञानीकी कल्पनारूप निर्णय करै है ॥ ७० ॥

घटत्वेनयथापृथ्वी पटत्वेनैवतंतवः ॥
विनिर्णीता विमूढेन देहत्वेन तथात्मता ॥ ७१ ॥

सं. टी. घटत्वेनेति ॥ ७१ ॥

. टी. जैसे अज्ञानी पुरुष मृत्तिकाको घट मानैहै और

तन्तुओंको पट मानै है तिसी प्रकार आत्माको देहरूप निर्णय करै है ॥ ७१ ॥

कनकं कुंडलत्वेन तरंगत्वेनवैजलम् ॥
विनिर्णीता० ॥ ७२ ॥

सं. टी. कनकमिति ॥ ७२ ॥

भा. टी. जिस प्रकार अज्ञानी पुरुष सुवर्णकूं कुंडल मानै है और जलको तरङ्गरूप मानै है तिसी प्रकार आत्माको देहरूप निर्णय करै है ॥ ७२ ॥

पुरुषत्वेयथास्थाणुर्जलत्वेनमरीचिका ॥
विनिर्णीता० ॥ ७३ ॥

सं. टी. पुरुषत्व इति ॥ ७३ ॥

भा. टी. जिसप्रकार अज्ञानी पुरुष शाखाहीन वृक्ष अर्थात् ठूंठवृक्षको पुरुषरूप मानैहै और मरुमरीचिकाको जलरूप मानै है तिसी प्रकार आत्माको देह रूप निर्णयकरै है ॥ ७३ ॥

गृहत्वेनैव काष्ठानिखड्गत्वेनैवलोहता॥
विनिर्णीता० ॥ ७४ ॥

सं. टी. गृहत्वेनेति सर्पत्वेनेत्यादि पंचानामप्येतेषां श्लोकानामर्थः स्फुटतर एवास्त्यतो न व्याख्यानं कृतम् ॥ ७४ ॥

भा. टी. जिसतरह बहुत सारे काष्ठोंके समूहको अज्ञानी घर मानलेयहै और लोहेको तलवार मानलेयहै तिसीप्रकार आत्माको देहरूप निर्णय करै है ॥ ७४ ॥

**यथा वृक्षविपर्यासो जलाद्भवति कस्य-चित् ॥ तद्वदात्मनि देहत्वं पश्यत्य-ज्ञानयोगतः ॥ ७५ ॥**

सं. टी. नन्वन्यथा निर्णये किंकारणमितिचेत्तदज्ञा-नमेवेति सदृष्टांतमाह यथा वृक्षेत्यादि द्वादशभिः॥७५॥

भा. टी. जिस जलमें वृक्षकी छाया पडै है और अज्ञानी पुरुप उस प्रतिबिम्बकोही साक्षात् वृक्षमान लेय तिसीप्रकार अज्ञानवशसे इस आत्मामें देहका ज्ञान है ॥ ७५ ॥

**पोतेन गच्छतः पुंसः सर्वं भातीवचंच लम् ॥ तद्वदा० ॥ ७६ ॥**

सं. टी. पोतेनेति पोतेन नौकया स्पष्टमन्यत्॥७६॥

भा. टी.जिस प्रकार जिहाजनौकामें चढकर जानेवाले पुरुप-को सब चलताहुआ मालूम होय है तिसी प्रकार अज्ञानवशसे इस आत्मामें देहका ज्ञानहै ॥ ७६ ॥

**पीतत्वं हियथा शुभ्रे दोषाद्भवति कस्य-चित् ॥ तद्व० ॥ ७७ ॥**

सं. टी. पीतत्वमिति ॥ ७७ ॥

भा. टी. जिस प्रकार किसी पुरुषको पित्तदोषसे कमल वाय हो जाय है और श्वेत वस्तुभी पीली मालूम होने लगैहै तिसी प्रकार अज्ञान वशसे इस आत्मामें देहका ज्ञानहै ॥७७॥

**चक्षुभ्यां भ्रमशीलाभ्यां सर्वं भातिभ्र-मात्मकम् ॥ तद्व० ॥ ७८ ॥**

स. टी. चक्षुभ्यामिति ॥ ७८ ॥

भा. टी. जिस प्रकार किसी पुरुषके नेत्रोंमें भ्रम होय है अर्थात् घूमनेकी बेमारी होयहै उस पुरुषको सम्पूर्ण पदार्थ घूमते हुए मालूम होयहैं तिसी प्रकार अज्ञानवशसे इस आत्मामें देहका ज्ञान है ॥ ७८ ॥

**अलातं भ्रमणेनैव वर्तुलं भाति सूर्य-वत् ॥ तद्वदा० ॥ ७९ ॥**

सं. टी. अलातमिति ॥ ७९ ॥

भा.टी. जिसप्रकार जलाहुआ मुराड घुमानेसे वह सूर्य्यकी नाईं वर्त्तुलाकार मालूम होयहै तिसी प्रकार अज्ञानवशसे इस आत्मामें देहका ज्ञानहै ॥ ७९ ॥

**महत्त्वे सर्ववस्तूनामणुत्वं ह्यति दूरतः॥ तद्वदा० ॥ ८० ॥**

सं. टी. महत्त्व इति हीति सर्वलोकप्रसिद्धौ ॥८०॥

भा. टी. जिस प्रकार बहुत बडी वस्तुभी अत्यन्त दूरसे

अतिसूक्ष्मकी तरह दीखै है तिसी प्रकार अज्ञानवशसे इस आत्मामें देहका ज्ञानहै ॥ ८० ॥

**सूक्ष्मत्वेसर्वभावानां स्थूलत्वं चोपनेत्रतः ॥ तद्वदा० ॥ ८१ ॥**

सं. टी. सूक्ष्मत्वेइति ॥ ८१ ॥

भा. टी. जिस प्रकार अतिसूक्ष्म वस्तुओंकाभी उपनेत्र अर्थात् दूरवीन आदिसे अतिस्थूल वस्तुकी तरह बोध होय है तिसी प्रकार अज्ञान वशसे इस आत्मामें देहका ज्ञानहै ॥ ८१ ॥

**काचभूमौजलत्वंवा जलभूमौहिकाचता ॥ तद्वदा० ॥ ८२ ॥**

सं. टी. काचभूमाविति ॥ ८२ ॥

भा. टी. जिस प्रकार काँचकी भूमिमें जलकी बुद्धि होय है और जलकी भूमिमें काँचकी बुद्धि होयहै तिसी प्रकार अज्ञान वशसे आत्मामें देहज्ञान है ॥ ८२ ॥

**यद्वदग्नौ मणित्वं हि मणौ वा वह्निता पुमान् ॥ तद्वदा० ॥ ८३ ॥**

सं. टी. यद्वदिति ॥ ८३ ॥

भा. टी. जिस प्रकार भ्रमसे अग्निमें मणिकी बुद्धि होय है और मणिमें अग्निकी बुद्धि होय है तिसी प्रकार अज्ञान वशसे आत्मामें देहका ज्ञानहै ॥ ८३ ॥

**अभ्रेषु सत्सु धावत्सु सोमो धावति भाति वै ॥ तद्वदा० ॥ ८४ ॥**

सं. टी. अभ्रेष्विति ॥ ८४ ॥

भा. टी. जिस प्रकार आकाशमें मेघोंके दौडनेसे चन्द्रमा दौडतासा मालूम होय है तिसी प्रकार अज्ञान वशसे आत्मा में देहका ज्ञान है ॥ ८४ ॥

**यथैवदिग्विपर्यासो मोहाद्भवति कस्य चित् ॥ तद्वदा० ॥ ८५ ॥**

सं. टी. यथेति : यथावृक्षेत्यादिश्लोकानां स्फुटार्थ त्वात्पिष्टपेषणतुल्यत्वेन न व्याख्यानं कृतम् ॥ ८५ ॥

भा. टी. जिस प्रकार मोह वशसे किसीको दिशाओंमें भ्रम होय है तिसी प्रकार अज्ञान वशसे आत्मामें देहका ज्ञान है ॥ ८५ ॥

**यथाशशी जले भाति चंचलत्वेन कस्य चित् ॥ तद्वदा० ॥ ८६ ॥**

सं. टी. यथाशशीति शशीत्युपलक्षणं सूर्यादीना- मपि शेषं स्पष्टम् ॥ ८६ ॥

भा. टी. जिस प्रकार किसीको किसी समय जलके हिलनेसे चन्द्रका प्रतिविम्ब हिलनेसे चन्द्रमा हिलैहै ऐसा बोध होय इसी प्रकार अज्ञान वशसे आत्मामें देहका ज्ञानहै ॥ ८६ ॥

एवमात्मन्यविद्यातो देहाध्यासो हि जायते ॥ एवमात्मपरिज्ञानाल्लीयते च परात्मनि ॥ ८७ ॥

सं. टी. एवं द्वादशभिः श्लोकैरुक्तमर्थमुपसंहरति एवमिति एवमुक्तेनप्रकारेणात्मन्यविद्यातः आत्माज्ञानात् देहाध्यासो मनुष्योहमित्यादिबुद्धिर्जायते भवति हीति प्रसिद्धो नन्वेतस्य निवृत्तिः कुतोभवेदिति चेदात्मज्ञानादेवेत्याहोत्तरार्धेन सइति सएव देहाध्यास एवात्मपरिज्ञानात् ब्रह्मात्मैक्यसाक्षात्कारात्परात्मनि अज्ञानतत्कार्यरहिते प्रत्यगभिन्ने ब्रह्मणि लीयते ब्रह्मस्वरूपेणावतिष्ठते नह्यधिष्ठानंविनाऽऽरोपितस्य स्वरूपमस्ति चकारादध्यासकारणमज्ञानमपि लीयतइतिअन्यथाऽध्यासलयाभावादित्यर्थः नहि कारणे सतिकार्यस्य लयः संभवति तस्मादात्मज्ञानादेव सकारणकार्याध्यासनिवृत्तिरित्यलं पल्लवितेन ॥ ८७ ॥

भा. टी. इस प्रकार आत्मामें देहाध्यास अर्थात् देह ज्ञान होय है और जब आत्माका तत्वपरिज्ञान होयहै तब वह देहाध्यास परमात्मामें लीन होजाय है अर्थात् देहका ज्ञान आत्मज्ञानमें लय होजाय है ॥ ८७ ॥

सर्वमात्मतयाज्ञातं जगत्स्थावरजंगं

**मम् ॥ अभावात्सर्वभावानांदेहस्य चा-त्मता कुतः ॥ ८८ ॥**

सं. टी. एतदेव विवृणोति सर्वामिति आत्मता देह-स्य नेत्यर्थः स्पष्टमन्यत् ॥ ८८ ॥

भा. टी. जब स्थावर जङ्गम सम्पूर्ण जगत् आत्मस्वरूप मालूम होने लगै है तब सब पदार्थोंके अनित्य होनेसे देह जो आत्मा किस प्रकार होसकै है अर्थात् कभीभी नहीं होय है ॥ ८८ ॥

**आत्मानंसततंजानन्कालंनयमहाद्यु-ते ॥ प्रारब्धमखिलंभुंजन्नोद्वेगंकर्तुम-र्हसि ॥ ८९ ॥**

सं. टी. ननु ज्ञानिनो निष्प्रपंचात्मतया मम किंस्यात् ब्रह्मण्यभोजनेनान्यस्तृप्यतीतिचेदतआह आत्मानमि-ति भोमहाद्युते कामादिपराभवेन स्वहितसाधनोन्मु-खस्त्वं आत्मानं प्रत्यगभिन्नं सततं आसुप्तिमृतिपर्यंतं जानन् वेदांतवाक्यैर्विचारयन् कालं नयातिक्रामस्व, विचारसाध्यज्ञानानंतरं चाखिलं प्रारब्धं चरमदेहारं-भकं कर्म भुंजन् सुखदुःखाभासानुभवेन क्षपयन्समुद्वेगं कर्तुंनार्हसीत्यर्थः ॥ ८९ ॥

भा.टी. हे महामते ! सदा आत्माको जानता हुआ सम-यको व्यतीत कर समस्त प्रारम्भ किये हुए कर्म्मके फलको भोगता हुआ उद्वेग मत कर ॥ ८९ ॥

उत्पन्नेप्यात्मविज्ञाने प्रारब्धंनैवमुंचति ॥ इतियच्छ्रूयतेशास्त्रे तन्निराक्रियतेऽधुना ॥ ९० ॥

सं. टी. वस्तुतस्तु प्रारब्धमेव नास्ति कुतोभोगः भोगाभावे कुत उद्वेगकारणं तदभावेच कुतस्तरां तन्निषेधोपदेश इतिवेदांतसिद्धांतरहस्यं वक्तुं प्रतिजानत आचार्याःउत्पन्नः इति अत्रेयं प्रक्रिया जगत्प्रतीतिस्त्रिधा लौकिकी शास्त्रीयानुभाविकी चेति तत्राद्या पारमार्थिकी द्वितीयाऽपरमार्थिकी[1] तृतीयातुप्रातिभासिकी तासां निवृत्तिस्तु क्रमात् वेदांतश्रवणादित्रयसाक्षात्कारप्रारब्धक्षयै भवति नान्यथेति तत्रेयं प्रतिज्ञाऽन्यप्रतीत्यभिप्रायेणेतिज्ञातव्यं श्लोकार्थस्तु स्फुट एव ॥ ९० ॥

भा. टी. आत्मज्ञान होने परभी पुरुष कर्म्मफलका त्याग नहीं करै है ऐसा शास्त्रोंमें सुननेमें आवे है उसका अब हम निराकरण आर्थात् खण्डन करैं हैं ॥ ९० ॥

तत्त्वज्ञानोदयादूर्ध्वं प्रारब्धं नैव विद्यते ॥ देहादीनामसत्त्वात्तु यथास्वप्नोविबोधतः ॥ ९१ ॥

सं. टी. तदेवाह तत्त्वेति ज्ञानेन सर्वव्यवहारकारणा-

---

१ व्यावहारिकी।

ज्ञाननिवृत्तौ प्रारब्धाभावइति श्लोकार्थः । पदार्थस्तु स्फुटएव ॥ ९१ ॥

भा. टी. तत्त्वज्ञानके अनन्तर प्रारब्ध अर्थात् कर्म्मफल नहीं रहताहै क्योंकि जैसे स्वप्नमें नानाप्रकार विचित्र विचित्र प्रकार देखनेमें आवैं हैं और जब पुरुष जगैहै तौ सबझूटे होजायहैं इसी प्रकार आत्मज्ञान होनेसे देहादि असत् स्वरूप मालूम होने लगैं हैं और जब देहादिक असत् हुए हैं तब प्रारब्ध कर्म्म और उनके फलभी असत्स्वरूप होजायहैं॥ ९१ ॥

कर्मजन्मांतरीयं यत्प्रारब्धमितिकीर्तितम् ॥ तत्तुजन्मांतराभावात्पुंसोनैवास्तिकर्हिचित् ॥ ९२ ॥

सं. टी. इदानीं प्रारब्धशब्दं व्युत्पादयन्नुक्तमुपसंहरति कर्मेति तत्र कर्म त्रिविधं संचितक्रियमाणप्रारब्धभेदात् तन्मध्ये भाविदेहारंभकं संचितं तथावर्तमान देहनिर्वर्त्यंक्रियमाणं प्रारब्धंतु वर्तमानदेहारंभकं तत्र यद्यपि संचितं जन्मांतरीयमेव तथापि भाविदेहस्य तत्प्रारब्धमेव भवति तेनेदं सिद्धमात्मनः स्वतः कर्तृत्वाभावात्कालत्रयेपि जन्मनास्तीति सर्वमवदातम् ॥ ९२॥

भा.टी. पूर्व जन्मके कर्म्म प्रारब्ध कहैं हैं और जब पुरुषको तत्त्वज्ञान होय है फिर जन्म नहीं होयहै यदि जन्म नहीं हुआ तो कर्मका भोक्ता कोन होय इस कारण तत्त्वज्ञान होनेके

अनन्तर पुरुष कर्म्मफलका भोक्ता नहीं होयहै। जन्म नहीं होनेमें यह श्रुति प्रमाणहै ("न स पुनरावर्त्तते") ॥ ९२ ॥

स्वप्नदेहोयथाध्यस्तस्तथैवायंहि देहकः ॥ अध्यस्तस्य कुतोजन्म जन्माभावे हि तत्कुतः ॥ ९३ ॥

सं. टी. पूर्वोक्तं दृष्टांतं विवृण्वन्सकारणजन्माभावे युक्तिमाह स्वप्नेति जन्माभावे तत्प्रारब्धं कुतः स्पष्ट मन्यत् ॥ ९३ ॥

भा. टी. स्वप्नके देहकी तरह यह देह अध्यस्त (विनष्ट) है फिर जन्म किसप्रकार होसकै है इससे किसप्रकार प्रारब्ध अर्थात् पूर्व जन्मके कर्म्मफलको भोगसकै है। क्योंकि जब जन्महोय तौ कर्म्म भोगै जन्मही नहीं तौ कर्म्म कहां ॥ ९३ ॥

उपादानं प्रपंचस्य मृद्भांडस्येवकथ्यते ॥ अज्ञानं चैववेदांतैस्तस्मिन्नष्टेक्व विश्वता ॥ ९४ ॥

सं. टी. ननु देहादिप्रपंचस्य यतोवेत्यादिश्रुतेः सत्य ब्रह्मजन्यत्वात्कथंप्रातिभासिकत्वमितिचेदुच्यते उपादानमिति अत्र कारणं द्विविधं निमित्तोपादानभेदात् तत्र निमित्तं नामोत्पत्तिमात्रकारणं उपादानंतूत्पत्तिस्थितिलयकारणं तत्र वेदांतैः ' मायांतु प्रकृतिं वि

द्यात्' इत्यादिभिः प्रपंचस्योपादानमज्ञानं पठ्यते च-कारादुब्रह्मापि अत्रायंभावःनकेवलं ब्रह्मैव जगत्कारणांनि विंकारत्वात् नापि केवलमज्ञानं जडत्वात् तस्मादुभयं मिलित्वैव जगत्कारणंभवतीति "सत्यानृते मिथुनीकरोति" इत्यादिश्रुतेः तत्रदृष्टांतभांडस्य कटकरकादेर्मृदिव मृत्पिंडइव तत्र जलस्थाने ब्रह्म पिंडीकरणसामर्थ्यसाम्यादज्ञानं तु मृत्तिकास्थाने आवरकत्वसाम्यात् तत्र ब्रह्मणोऽविनाशित्वाद्ब्रह्मज्ञानेन तस्मिन्नज्ञान एव नष्टेसति विश्वता जीवजगदीश्वरात्मकजगद्भावः क नक्काप्यस्तीत्यर्थः ॥ ९४ ॥

भा. टी. जैसे घटके मृत्तिका और जल दो उपादान कारणहैं इसी प्रकार प्रपञ्चकेभी ब्रह्म और अज्ञान दो उपादान कारणहैं ऐसा वेदान्त शास्त्रोंके प्रमाणसे जाना जायहै और जब उपादान स्वरूप अज्ञानहीका नाश होगया तौ फिर संसार कहां और जब संसार नहीं तौ कर्म्मभोगभी नहीं ॥ ९४ ॥

**यथारज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात् ॥ तद्वत्सत्यमविज्ञाय जगत्पश्यति मूढधीः ॥ ९५ ॥**

सं. टी. मिथुनीभावस्यैव जगत्कारणत्वं सदृष्टांतं प्रपंचयति यथारज्जुमिति ॥ ९५ ॥

भा. टी. जैसे भ्रम वशसे रज्जुमें सर्पका ज्ञान होजाय और सर्पमें रज्जुज्ञान होनेसे मूढ पुरुष सर्पको पकडलेय हैं

तिसी प्रकार सत्स्वरूप ब्रह्मको नहीं जानके जगत्को सत्स्वरूप मानै है और फँसरहै है ॥ ९५ ॥

रज्जुरूपेपरिज्ञाते सर्पखंडंनतिष्ठति ॥
अधिष्ठानेतथाज्ञाते प्रपंचः शून्यतां
गतः ॥ ९६ ॥

सं॰ टी॰ इदानीं यदुक्तं तस्मिन्नष्टे कविश्वतेति तत्प्रपंचयन् पूर्वोक्तं प्रारब्धाभावं सदृष्टांतमुपसंहरति सार्द्धेन रज्जुरूपइति स्पष्टम् ॥ ९६ ॥

भा॰ टी॰ जैसे रज्जुमें रज्जुका ज्ञान होनेसे सर्पज्ञाननहीं रहै है तिसी प्रकार प्रपञ्चके अधिष्ठान भूत परमात्माके ज्ञान होने पर प्रपञ्च मिथ्या मालूम होयहै ॥ ९६ ॥

देहस्यापि प्रपंचत्वात्प्रारब्धावस्थितिः
कुतः ॥ अज्ञानिजनबोधार्थं प्रारब्धं
वक्तिवै श्रुतिः ॥ ९७ ॥

सं॰ टी॰ किंच देहस्येति ननु जीवन्मुक्तस्य ज्ञानिनः प्रारब्धाभावेसति "अत्र ब्रह्मसमश्नुते" इत्यादिश्रुतिः प्रारब्धं किमर्थं वक्तीति चेदुच्यते अर्द्धेन अज्ञानीति श्रुतिः अज्ञानिजनबोधार्थं प्रारब्धं वक्तीत्यर्थः ज्ञानेन सर्वव्यवहारकारणेऽज्ञाने नष्टेसति ज्ञानिनः कथंव्यवहार इत्यज्ञानिभिराक्षिते प्रारब्धादिति तद्बोधार्थमिति शेषं स्पष्टम् ॥ ९७ ॥

भा.टी. देहभी प्रपञ्चस्वरूपहै और प्रपञ्चके अध्यस्त होनेसे पूर्व जन्मके कर्म्म कहां यदि कहो साक्षात् श्रुति कर्म्मभोगको कहै है तहां ऐसा जानना कि जिनको तत्त्वज्ञान नहीं हुआहै अज्ञानी हैं उनके बोध न करानेके वास्ते श्रुति कहेहै॥ ९७॥

**क्षीयंतेचास्यकर्माणि तस्मिन्दृष्टेपरावरे॥ बहुत्वंतन्निषेधार्थं श्रुत्यागीतंचयत्स्फुटम् ॥ ९८ ॥**

सं. टी: किंतर्हि ज्ञानिबोधार्थं वक्ति श्रुतिरितिचेदुच्यते क्षीयंतइति "भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः॥ क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इतिश्रुत्या कर्माणीति बहुत्वं यत् स्फुटं गीतं तत्तन्निषेधार्थं प्रारब्धाभावप्रतिपादनार्थं अन्यथा संचितक्रियमाणापेक्षया कर्मणीति द्वित्वं गेयं तथा न गीतमतो ब्रह्मात्मसाक्षात्कारात् चिज्जडग्रंथिभेदेन संचितक्रियमाणप्रारब्धाख्यत्रिविधकर्मक्षयांते परमपुरुषार्थं ज्ञानिबोधार्थं श्रुतिर्वक्तीतिभावः ॥ ९८ ॥

भा: टी. जो कर्म्म श्रुतिनें प्रतिपादन कियाहै वह सम्पूर्ण परात्पर परमात्माके दर्शन करनेसे अर्थात तत्त्वज्ञान होनेसे नष्ट होजाता है सञ्चित, क्रियमाण, प्रारब्ध, तीन प्रकारका कर्म्म श्रुतियोंमें कहागयाहै सो कर्म्मका अभाव प्रतिपादन करनेके अर्थ बहुत्व दरसाया ॥ ९८ ॥

उच्यतेऽज्ञैर्बलाच्चैतत्तदानर्थद्वयागमः॥
वेदांतमतहानं च यतोज्ञानमिति श्रु-
तिः॥ ९९॥

सं॰ टी॰ उक्तवैपरीत्येबाधकमाह उच्यतइति एत त्प्रारब्धमज्ञैः श्रुतितात्पर्यानभिज्ञैर्बलादविवेकसामर्थ्या-च्चेदुच्यते यथार्थतया प्रतिपाद्यते चकारादद्वयात्म्या-नं नपश्यंति तदाऽनर्थद्वयागमो दोषद्वयप्राप्तिः तत्र प्रारब्धरूपस्य द्वैतस्यांगीकारे अनिर्मोक्षप्रसंग एको दोषः मोक्षाभावे ज्ञानसंप्रदायोच्छेदरूपोद्वितीयो दोषइ तिनकेवलं दोषद्वयस्यैव प्राप्तिरपितु वेदांतमतहानंच वेदांतमतस्याद्वैतस्य हानं त्यागो भविष्यति प्रारब्ध ग्रहणरूपस्य द्वैतस्य याथार्थ्यादित्यर्थः तर्हि किंप्रति-पत्तव्यामित्यत आह यतइति यतो यस्याः सकाशात् ज्ञानंभवति तादृशी सा श्रुतिर्ग्राह्येति शेषः सा श्रुतिस्तु "तमेवधीरोविज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः॥ नानुध्याया द्बहूञ्छब्दान् वाचोविग्लापनंहितत्" इति एतदभिप्रायः क इति चेल्लिख्यते धीरो विवेकी ब्राह्मणो ब्रह्मभावितु मिच्छुस्तमेव वेदांतप्रसिद्धमात्मानं विज्ञायाऽऽदावुपदे-शतः शास्त्रतश्च ज्ञात्वाऽनंतरंप्रज्ञां शास्त्राचार्योपदिष्टवि-षयामपरोक्षानुभवपर्यंतां जिज्ञासापरिसमाप्तिकरीं कुर्वीत बहून् कर्मोपासनाप्रतिपादकान् शब्दान् वाक्यसंदर्भा-

न्नानुध्यायान्नचिंतयेत् तर्हि तान् ब्रूयार्त्किनेत्याहवाचइति तद्वैतशास्त्रपठनं वाचोविग्लापनं विशेषेणश्रमकरं हीति सर्वानुभवसिद्धमित्यलंपल्लवितेन ॥ ९९ ॥

भा. टी. यदि अनभिज्ञ अर्थात् अज्ञानी पुरुष बलात्कार करके कर्म्म अर्थात् प्रारब्धको स्वीकार करै तब उनको दो दोष आवैंगे एक तौ मोक्षका अभाव दूसरे मोक्ष न होनेसे ज्ञानका अभाव और इस प्रकार वेदान्त मत ( अद्वैतवाद )की भी हानिहै इस हेतु प्रारब्धरूप द्वैत स्वीकार करना पड़ेगा अद्वैतवाद तौ होही नहीं सकैगा अब जिस श्रुतिसे ज्ञानलाभ होय ऐसी श्रुति कहनी होगी यदि श्रुति नहीं कहोगे तौ और कोई ज्ञानलाभका उपाय नहीं है ॥ ९९ ॥

त्रिपंचांगान्यथोवक्ष्ये पूर्वोक्तस्यहि ल-
ब्धये ॥ तैश्चसर्वैः सदाकार्यं निदि-
ध्यासनमेवतु ॥ १०० ॥

सं. टी. तदेवमेतावता ग्रंथसंदर्भेण मुख्याधिकारिणो वैराग्यादिसाधनचतुष्टयपूर्वकं वेदांतवाक्यविचारएवप्रत्यगभिन्नब्रह्मापरोक्षज्ञानद्वारा मुख्यं मोक्षकारणमित्यभिहितं इदानीमसकृद्विचार्यापि बुद्धिमांद्यविपर्यासत्त्यादिप्रतिबंधेनापरोक्षज्ञानं यस्य नजायते तस्य मंदाधिकारिणो निर्गुणब्रह्मोपासनमेवमुख्यं साधनमित्यभि-

प्रेत्यससाधनं ध्यानयोगं प्रतिजानत आचार्याः त्रिपं-
चेति अथोशब्दोधिकारिभेदार्थः क्वचिदत इति पाठस्त-
स्मिन् पक्षे यतो मंदाधिकारी विचारं न लभतेऽतो हे-
तोरित्यर्थः त्रिपंच त्रिगुणितानि पंच पंचदशेत्यर्थः
तत्संख्याकान्यंगानि निदिध्यासनांगिसाधकसाधनवि-
शेषान् यज्ञसाधकप्रयाजादिवदित्यर्थः वक्ष्ये वक्ष्यामि
तैर्वक्ष्यमाणैः सर्वैरंगैर्निदिध्यासनमेवकार्यं नतु तूष्णी-
मवस्थानमुचितमित्यर्थः निदिध्यासनकर्तव्यप्रतिज्ञाप्र-
योजनमाह पूर्वोक्तस्येति पूर्वोक्तस्य स्वरूपावस्थान
लक्षणमोक्षस्य सिद्धय इति हीति वेदांतप्रसिद्धौ तुशब्दः
पातंजलवैलक्षण्यलक्षणेन मोक्षस्य सिद्धय इति अनेना-
ष्टांगप्रतिपादकं पातंजलमवैदिकत्वाद्वैशेषिकादिवदना-
देयमिति ध्वनितम् ॥ १०० ॥

भा. टी. इसके अनन्तर पूर्व कहे हुए ज्ञानलाभके अर्थ १५ पन्द्रह निदिध्यासनके अङ्ग कहूँगा उन्हीं अङ्गोंके द्वारा सदा निदिध्यासन करना चाहिये ॥ १०० ॥

नित्याभ्यासादृते प्राप्तिर्न भवेत्सच्चिदा-
त्मनः ॥ तस्माद्ब्रह्मनिदिध्यासेज्जिज्ञा-
सुः श्रेयसेचिरम् ॥ १०१ ॥

सं. टी. मंदाधिकार्यन्यतसर्वं कर्म सगुणोपासनाविचा-

रूपं साधनं च विहाय श्रद्धयाचार्योक्तप्रकारेण निर्गुणं ब्रह्मैव निदिध्यासेदित्याह नित्येति स्पष्टम् ॥ १०१ ॥

भा. टी. निदिध्यासनके विना सच्चिदानन्द ब्रह्मकी प्राप्ति नहीं होयहै इसकारण ब्रह्मज्ञानके जाननेकी इच्छा करनेवाला बहुतकालतक मङ्गलके अर्थ निदिध्यासन करै ॥ १०१ ॥

यमोहिनियमस्त्यागो मौनंदेशश्चका- लता ॥ आसनं मूलबंधश्च देहसाम्यं च दृक्स्थितिः ॥ १०२ ॥ प्राणसंयमनं चैव प्रत्याहारश्च धारणा ॥ आत्म- ध्यानं समाधिश्च प्रोक्तान्यंगानि वै क्रमात् ॥ १०३ ॥

सं.टी. ननु कानि तान्यंगानि यैः सह निदिध्यासनं कर्त्तव्यमित्यपेक्षायां तानि निर्दिशति यमइति द्वाभ्याम् उत्तानार्थावुभावपि श्लोकौ ॥ १०२ ॥ १०३ ॥

भा. टी. यम, नियम, त्याग, मौन, देश, काल, आसन, मूलबन्ध, देहसाम्य, दृक्स्थिति, प्राणसंयमन, प्रत्याहार, धारण, आत्मध्यान, समाधि, यह सम्पूर्ण अङ्ग क्रमसे कहे हैं ॥ १०२ ॥ १०३ ॥

सर्वं ब्रह्मेति विज्ञानादिंद्रियग्रामसंय- मः ॥ यमोयमिति संप्रोक्तोऽभ्यसनी- योमुहुर्मुहुः ॥ १०४ ॥

सं. टी. इदानीमेतेषां प्रत्येकं निर्देशक्रमेण स्वाभिमतानि लक्षणान्याह सर्वमित्याद्येकविंशत्या तत्र प्रथमोद्दिष्टं यमं तावद्दर्शयति सर्वमिति सर्वमाकाशादिदेहांतं जगद्ब्रह्म बाधसामानाधिकरण्यद्वारा स्थाणुपुरुषादिवदित्यर्थः इति विज्ञानान्निश्चयाद्धेतोरिंद्रियाणां श्रोत्रादीनामेकादशकरणानां ग्रामः समूहस्तस्य संयमः सम्यक् शब्दादिविषयाणां विनाशित्वसातिशयत्वदुःखदत्वादिदोषदर्शनात् यमो विषयेभ्यो निवारणम् अयं यम इतिसंप्रोक्तः नतु केवलमहिंसादिरित्यर्थः ततश्च किमतआह अभ्यसनीय इति अयं मुहुर्मुहुरभ्यसनीय इति ॥ १०४ ॥

भा. टी. सम्पूर्ण जगत् ब्रह्म है इस प्रकार निश्चय करके सम्पूर्ण इन्द्रियोंका निग्रह करना है सो 'यम' कहावै है इसका अभ्यास पुरुषको वारम्वार करनायोग्य है ॥ १०४ ॥

सजातीयप्रवाहश्च विजातीयतिरस्कृतिः ॥ नियमोहिपरानंदो नियमात्क्रियतेबुधैः ॥ १०५ ॥

सं. टी. एवं यमंलक्षयित्वा नियमंलक्षयति सजातीयेति सजातीयं प्रत्यगभिन्नं परंब्रह्म तदेकाकारोवृत्तिप्रवाहः सजातीयप्रवाहः यद्वा सजातीयानामसंगोहमविक्रियोहमित्यादिप्रत्यगभिन्नब्रह्मप्रत्ययानांप्रवाहः चपुनः

विजातीयतिरस्कृतिर्विजातीयं ब्रह्मात्मविलक्षणं जगत्पूर्वसंस्काराज्जायमाना तदाकारावृत्तिरित्यर्थः । तस्य तिरस्कृतिर्दोषस्मृत्याऽधिकोपेक्षाऽनादरइत्यर्थःअयंनियमइत्यर्थः । नतु केवलं शौचादिरित्यर्थः । इत्युपनिषत्प्रसिद्धौ । नन्वनयोरुपनिषत्प्रसिद्ध्या कः पुरुषार्थ इतिचेदतआह परानंदइति ततश्च किमत आह नियमादित्यादिसुगमम् ॥ १०५ ॥

भा. टी. सजातीय प्रवाह अर्थात् मैं ब्रह्महूं इस प्रकार ज्ञानका प्रवाह और विजातीयतिरस्कृति अर्थात् ब्रह्मसे अतिरिक्त सम्पूर्ण संसार मिथ्या है इस प्रकार ज्ञानको नियम कहे हैं ॥ १०५ ॥

त्यागः प्रपंचरूपस्य चिदात्मत्वावलोकनात् ॥ त्यागोहि महतां पूज्यःसद्यो मोक्षमयो यतः ॥ १०६ ॥

सं. टी. इदानीं तृतीयं त्यागं लक्षयति त्यागइति प्रपंचरूपस्य प्रपंचो नामरूपलक्षणो रूप्यते घटोयं पटोयमित्यादि नामरूपतो निरूप्यते व्यवह्रियते प्रकाश्यते येन तत्प्रपंचरूपं सर्वाधिष्ठानभूतं पदार्थस्फुरणं तस्य चिदात्मत्वावलोकनाच्चिदजडं स्वतएव प्रकाशमानं ब्रह्म तदात्मास्वरूपं यस्य तद्भावस्तस्याऽवलोकनमनुसंधानं तस्माद्धेतोर्यस्त्यागः नामरूपोपे-

क्षा स एव त्यागस्त्यागशब्दवाच्यः "ईशावास्यमिदंसर्वम्" इत्यादिश्रुतेः हीति विद्वदनुभवप्रसिद्धौ नन्वयं त्यागो नकुत्रापि प्रसिद्ध इत्याशंक्याह महतांपूज्यइति तत्रहेतुः सद्यइति यतोयं त्यागः सद्योनुसंधानकालएव मोक्षमयः परमानंदस्वरूपावस्थानरूपः अतएवात्मतत्त्वविदामिष्टत्वादतिप्रसिद्धोयं त्यागइत्यर्थः । तस्मादयमेव मुमुक्षुणा कर्तव्यो नान्यः केवलस्वकर्माद्यकरणरूप इतिभावः एवमग्रेप्यूह्यम् ॥ १०६ ॥

भा. टी. चैतन्यस्वरूप तत्त्वको अवलोकन करके जो प्रपञ्चका अर्थात् घट पटादि नामसे व्यवहृत पदार्थोंका त्याग करना है सो त्याग कहावे है इसका महात्मा लोग बडा आदर करैं हैं इस कारण यह शीघ्रही मोक्षको देय है ॥ १०६ ॥

यस्माद्वाचोनिवर्तंते अप्राप्य मनसा सह ॥ यन्मौनंयोगिभिर्गम्यं तद्भवेत्सर्वदा बुधः ॥ १०७ ॥

सं. टी. अथमौनं लक्षयति यस्मादिति शब्दप्रवृत्तिनिमित्तजातिक्रियादेरभावात् मनोवाचामगोचरं यन्मौनं वक्तुमशक्यं यद्ब्रह्म तथापि योगिभिर्गम्यं ज्ञानयोगिभिः प्रत्यगभिन्नत्वेन प्राप्यं तत्प्रसिद्धमेव ब्रह्मरूपंमौनं सर्वदा बुधो विवेकी भवेत्तदहमस्मीत्यनुसंदध्यादित्यर्थः१०७॥

भा. टी. जिसको वाणी और मन नहीं प्राप्त होसके हैं और योगी लोकोंको लब्धहोय है ऐसे परब्रह्मकाही नाम मौन है पण्डित जन तिस ब्रह्मका मैं ब्रह्महूं इस प्रकार अनुसन्धान करे ॥ १०७ ॥

वाचो यस्मान्निवर्त्तंते तद्वक्तुंकेनशक्यते ॥ प्रपंचो यदि वक्तव्यः सोपिशब्दाविवर्जितः ॥ १०८ ॥ इतिवातद्भवेन्मौनं सतांसहजसंज्ञितम् ॥ गिरामौनंतुबालानां प्रयुक्तं ब्रह्मवादिभिः ॥१०९॥

सं. टी. नन्विदं प्रत्यगभिन्नब्रह्मानुसंधानं ध्यानरूपं चतुर्द्दशमंगं प्रतीयते इत्याशंक्य स्वारस्यात्प्रकारांतरेण मौनमेव लक्षयति सार्द्धेन वाचइति अयंभावः शब्दप्रवृत्तिनिमित्ताभावाद्ब्रह्म यथावागविषयं तथानामरूपजात्यादिप्रपंचोपि सदसदादिविकल्पासहत्वाद्वागतीतः ॥ १०८ ॥ इतीति इत्युक्तप्रकारेण ब्रह्मजगतोर्वैवादत्यागरूपंवा तन्मौनं भवेत् केषामित्याकांक्षायां सतां चेदं प्रसिद्धमित्याह सतामिति सत्पुरुषाणां सहजस्थितिनाम्ना प्रसिद्धमित्यर्थः । ननु वाङ्नियमनमेव प्रसिद्धं मौनमितिचेदतआहार्द्धेन गिरेति ॥ १०९ ॥

भा. टी. जिसको वाणी नहीं प्राप्त होय उसकी वर्णना कौन करसके है अर्थात् कोई नहीं यदि प्रपञ्चकी वर्णना

करी जाय तौ वहभी शब्दरहित है अर्थात् प्रपञ्चमेंभी सत् असत् नाना प्रकारके पदार्थ मालूम होय हैं इसकारण प्रपंच-काभी वर्णन नहीं होसके है। इसकोभी मौन कहे है यह मौन साधुपुरुषोंको स्वभावसिद्ध होय है ब्रह्मवादी लोग बालकके मौनको मौन कहें हैं ॥ १०८ ॥ १०९ ॥

आदावंतेच मध्ये च जनोयस्मिन्न वि-द्यते ॥ येनेदं सततं व्याप्तं सदेशोविज-नःस्मृतः ॥ ११० ॥

सं. टी. इदानीं देशंलक्षयति आदाविति अत्र जन-स्य त्रैकालिकाभाव आनुभविकः स्वप्रतीत्याज्ञेयः नतु-लौकिकशास्त्रीयप्रतीतिभ्यां विरोधादिति भावः स्पष्ट-मन्यत् ॥ ११० ॥

भा. टी. जहाँ आदि, अन्त, मध्यये कहींभी जन न होय जिस करके निरन्तर संसार व्याप्त रहै उस देशका नाम निर्जन देश है सदा जनशून्य स्थानही योगसाधनके अर्थ उपयुक्त होय है ॥ ११० ॥

कलनात्सर्वभूतानां ब्रह्मादीनां निमे-षतः ॥ कालशब्देन निर्दिष्टो ह्यखंडा-नंदअद्वयः ॥ १११ ॥

सं. टी. अथ कालं लक्षयति कलनादिति निमेष-

तआरभ्य कलनात्सर्गस्थितिप्रलयाधारत्वादित्यर्थः शेषं स्पष्टम् ॥ १११ ॥

भा. टी. जिसके निमेषमात्रमें ब्रह्मादि सर्वभूतोंका कलन ( सृष्टि, स्थिति, प्रलय, ) होयहै इस कारण अखण्ड आनन्दस्वरूप अद्वय ब्रह्मही काल शब्द करके कहाजायहै ॥ १११ ॥

सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिंतनम् ॥
आसनं तद्विजानीयान्नेतरत्सुखनाशनम् ॥ ११२ ॥

सं. टी. आसनं लक्षयति सुखेनैवेति यस्मिन्सुखे सुखरूपे ब्रह्मणि चिंतनं कर्त्तव्याकर्त्तव्यचिंता नैवभवेत् तद्ब्रह्मासनं विजानीयादित्यन्वयः कीदृशं ब्रह्म अजस्रं कालत्रयावस्थायीत्यर्थः सुगममन्यत् ॥ ११२ ॥

भा. टी. जिसमें सदा भलीप्रकार सुखसे ब्रह्म विचार होय उसको आसन कहें हैं उससे अतिरिक्तमें ब्रह्म विचार नहीं होय है इस कारण आसनसे अन्य सुखकारक नहीं होय है किन्तु सुख नाश होयहै । सो आसन पद्म स्वस्तिकादिक जानना ॥ ११२ ॥

सिद्धं यत्सर्वभूतादि विश्वाधिष्ठानमव्ययम् ॥ यस्मिन् सिद्धाः समाविष्टास्तद्वै सिद्धासनं विदुः ॥ ११३ ॥

सं. टी. प्रसंगादासनविशेषं लक्षयति सिद्धमिति सिद्धंच तदासनंचाथवासिद्धानामासनं सिद्धासनमिति कर्मधारयतत्पुरुषसमासाभ्यां ब्रह्मैवेत्यर्थः ॥ ११३ ॥

भा. टी. जिससे सिद्धपुरुष सिद्ध कहलावें हैं और जिसमें सिद्ध पुरुष लीन रहें हैं और जो विश्वका अधिष्ठान स्वरूप अव्यय है वह सिद्धासन कहावे है ॥ ११३ ॥

**यन्मूलं सर्वभूतानां यन्मूलं चित्तबंधनम् ॥ मूलबंधः सदासेव्यो योग्योसौ राजयोगिनाम् ॥ ११४ ॥**

सं. टी. अथ मूलबंधं लक्षयति यन्मूलमिति आकाशादिसर्वभूतानां यन्मूलमादिकारणं ब्रह्म तथा चित्तबंधनं चित्तस्य बंधकारणं मूलाऽज्ञानं तदपि यन्मूलं यदाश्रयं पृथक्सत्ताशून्यत्वादिति यद्वा चित्तस्य बंधनं एकत्रलक्ष्ये निग्रहस्तदपि यन्मूलं यस्य ब्रह्मणः प्राप्तिनिमित्तमित्यर्थः स मूलबंध इत्यन्वयः राजयोगिनां व्यवहारेप्यविक्षिप्तचित्ततालक्षणो राजयोगस्तद्वतां ज्ञानपरिपाकयुक्तानामित्यर्थः शेषंस्पष्टम् ॥ ११४ ॥

भा. टी. आकाशादिपञ्चभूतोंका आदि कारण और जो चित्तैकाग्र्यका मूल है सो मूलबन्ध कहावे है यह मूलबन्ध राजयोगियोंको सदा सेवन करना योग्य है ॥ ११४ ॥

अंगानां समतांविद्यात्समे ब्रह्मणि ली-
यते ॥ नोचेन्नैवसमानत्वमृजुत्वंशुष्क-
वृक्षवत् ॥ ११५ ॥

सं. टी. इदानीं देहसाम्यं लक्षयति अगानामिति अंगानां ब्रह्मण्यध्यस्तानां स्वभावविषमाणामधिष्ठान-समत्वदृष्ट्या समतां विद्याज्जानीयात् चेत्समे ब्रह्मणि अंगवैषम्यमित्यत्राध्याहारः तच्चेन्नोलीयते समब्रह्मरूप-तया न तिष्ठतीत्यर्थः तर्हीत्यत्रशेषः शुष्कवृक्षवदंगाना-मृजुत्वंसरलत्वमचंचलत्वं च यत्तत्समानत्वं नैव भवेदि-तिसंबंधः अंगानां विषमस्वभावत्वादितिभावः ॥११५॥

भा. टी. सब प्राणियोंमें समदृष्टि करके जो समान ब्रह्ममें लीन होयहै सो देहसाम्य कहावे है सूकेहुए काष्ठकी तरह समान वस्तुको समता नहीं कहे हैं ॥ ११५ ॥

दृष्टिं ज्ञानमयीं कृत्वा पश्येद् ब्रह्ममयं
जगत् ॥ सादृष्टिः परमोदारा न नासा-
ग्रावलोकिनी ॥ ११६ ॥

सं. टी. इदानीं दृक्स्थितिं लक्षयति दृष्टिमिति ब्रह्मणिफलव्याप्यत्वाभावेपिवृत्तिव्याप्यत्वात् दृष्टिमंतः-करणवृत्तिं ज्ञानमयीमखंडब्रह्माकारां कृत्वा जगत्सर्वं ब्रह्ममयं पश्येत् ब्रह्मेवेदं सर्वमित्येतावन्मात्रैववृत्तिः का-र्येति भावः । स्पष्टमन्यत् ॥ ११६ ॥

भा. टी. दृष्टिको ज्ञानमय करके उस दृष्टिके द्वारा ब्रह्ममय जो जगत्को देखनाहै यही दृष्टि परम उदार मङ्गलकी देनेवाली है नासाके अग्रभागमें देखनेको दृष्टि नहीं कहे हैं ॥ ११६ ॥

**दृष्टिदर्शनदृश्यानां विरामो यत्रवाभ-वेत् ॥ दृष्टिस्तत्रैवकर्त्तव्या न नासाग्रा-वलोकिनी ॥ ११७ ॥**

सं. टी. ननु तथापि ब्रह्मणि वृत्तिप्रवृत्तिनिमित्त-जात्याद्यभावादिंद्रियादिप्रत्यक्षविषयस्य जगतो ब्रह्म-रूपत्वेन दर्शनं कथं स्यादित्याशंक्य स्वारस्यात्पक्षां-तरेणाह दृष्टीति वा शब्दः पक्षांतरे दृष्टीत्यादिना श्रो-त्रादिसर्वत्रिपुटीनामुपलक्षणं यत्र यस्मिन् ब्रह्मस्वरूपे दृष्ट्यादिसर्वत्रिपुटीनां विरामो लयो भवेत्तत्र तस्मि-न्नेव प्रपंचातीते दृष्टिरंतःकरणवृत्तिः कर्तव्या न नासि-काग्रावलोकिनीत्यर्थः ॥ ११७ ॥

भा. टी. और जिसमें दृष्टि दर्शन दृश्यका विराम होय है उसकोभी दृष्टि कहे हैं वहीदृष्टि करना योग्य है नासाके अग्र-भागमें देखना मात्ररूप जो दृष्टि है सो योग्य नहींहै ॥ ११७ ॥

**चित्तादिसर्वभावेषु ब्रह्मत्वेसर्वभावना-त् ॥ निरोधःसर्ववृत्तीनां प्राणायामःस-उच्यते ॥ ११८ ॥**

सं. टी. अथ प्राणायामं लक्षयति चित्तादीति मनोधीनत्वात्प्राणस्य मनोनिरोधेनैव प्राणनिरोधः नतु प्राणनिरोधेनैव पातंजलाभिमतेन मनोनिरोधस्तदधीनत्वाभावादिति फलितार्थः ॥ ११८ ॥

भा. टी. चित्तको आदिले सब प्रकारके पदार्थोंमें जो ब्रह्म भावना कर सब प्रकारकी इन्द्रियोंकी वृत्तियोंका जो रोकनाहै सो प्राणायाम कहावे है ॥ ११८ ॥

निषेधनं प्रपंचस्य रेचकाख्यः समीरणः ॥ ब्रह्मैवास्मीति यावृत्तिः पूरकोवायुरीरितः ॥ ११९ ॥

सं. टी. अमुं प्राणायामं स्वाभिमतेन रेचकादिविभागत्रयेण लक्षयति सार्द्धेननिषेधनमितिस्पष्टम् ११९॥

भा. टी. प्रपञ्चका निषेध अर्थात् मिथ्यात्वको रेचकनाम प्राणायाम कहे हैं एक ब्रह्मही सर्व रूपहै ऐसी जो वृत्तिहै सो पूरकनाम प्राणायाम कहावे है ॥ ११९ ॥

ततस्तद्वृत्तिनैश्चल्यं कुंभकः प्राणसंयमः ॥ अयंचापिप्रबुद्धानामज्ञानांघ्राणपीडनम् ॥ १२० ॥

सं. टी. तत इति अनात्मोपेक्षाऽऽत्मानुसंधानतद्दार्ढ्यानि रेचकादिशब्दवाच्यानीति भावार्थः । नन्वयं त्रिविधोपि प्राणायामो न कुत्रापि श्रुत इत्यपेक्षायामत्रा-

धिकारिणमाहार्द्धेन अयमिति अयमुक्तलक्षणः प्राणा-यामश्चकाराद्रेचकपूरकयुक्त इत्यर्थः । प्रबुद्धानां प्रकर्षेण-संभावनादिरहितत्वेन बुद्धानामात्मबोधयुक्तानां निः-संदेहाऽपरोक्षज्ञानिनामित्यर्थः । योग्यइत्यध्याहारः त-र्ह्यज्ञानां कीदृश इत्यत आह अज्ञानामिति ॥ १२० ॥

भा. टी. अनन्तर निश्चलतासे एक ब्रह्मही सर्व स्वरूपहै ऐसा निश्चय होताहै सो कुम्भक प्राणायाम कहावे है । इस प्रकार रेचक, पूरक, कुम्भक, ज्ञानियोंके प्राणायाम होय हैं अज्ञानी पुरुष वायु रोककर नासिकाको पीड़ा देनेको प्राणा-याम कहें हैं ॥ १२० ॥

**विषयेष्वात्मतां दृष्ट्वा मनसश्चिति म-ज्जनम् ॥ प्रत्याहारः स विज्ञेयोऽभ्यस-नीयो मुमुक्षुभिः ॥ १२१॥**

सं. टी. इदानीं प्रत्याहारं लक्षयति विषयेष्विति । विषयेषु घटादिषु यद्वा शब्दादिषु अन्वयव्यतिरेका-भ्यामात्मतां सत्तास्फुरत्ताप्रियतामात्रतां दृष्ट्वानुसंधाय मनसोंतःकरणस्य चितिमज्जनं नामरूपक्रियानुसंधान-राहित्येन चित्स्वरूपतयावस्थानं स प्रत्याहारः ततः किमत आह अभ्यसनीयइति ॥ १२१ ॥

भा. टी. विषयोंके विषे आत्मत्वको देखकर अर्थात् सर्व जगतको ब्रह्मय देखकर औरचतन्यैस्वरूप आत्मामें चित्तको

लगानाहै सो प्रत्याहार कहावे है मोक्षकी इच्छा करने-
वाले पुरुषोंको यह प्रत्याहार अवश्य अभ्यास करने
योग्यहै ॥ १२१ ॥

**यत्रयत्रमनो याति ब्रह्मणस्तत्रदर्शना-
त् ॥ मनसो धारणं चैव धारणासापरा
मता ॥ १२२ ॥**

सं. टी. धारणां लक्षयति यत्रेति यत्रयत्र यस्मिन्
यस्मिन् पदार्थे मनोयाति गच्छति तत्रतत्र ब्रह्मणः स-
त्तादिमात्रस्य नामाद्युपेक्षया दर्शनादनुसंधानान्मन-
सोधारणं ब्रह्मण्येव स्थिरीकरणं धारणेत्यर्थः । नन्वा-
धारादिषट्चक्रमध्ये एकत्र मनसो धारणं धारणेति
प्रसिद्धमतआह सेति साऽत्रोक्तलक्षणा धारणा परोत्कृष्टा
मता तत्त्वबोधवतामित्यर्थः । अन्या तु पातंजला-
भिमता प्राणायामादिवदपरेतिभावः च एवेत्यव्ययद्वयं
वेदांतविद्वदनुभवप्रसिद्धिं द्योतयति ॥ १२२ ॥

भा. टी. जहां जहां मन जाय तहां तहां ब्रह्मस्वरूप दर्शन
पूर्वक जो मनको निश्चल करनाहै सो सबसे उत्कृष्ट धारणा
कहावे है ॥ १२२ ॥

**ब्रह्मैवास्मीतिसद्वृत्त्या निरालंबतया
स्थितिः ॥ ध्यानशब्देनविख्यातापर-
मानंददायिनी ॥ १२३ ॥**

सं. टी. अथात्मध्यानं लक्षयति ब्रह्मैवेति सद्वृत्त्या सती प्रमाणांतरबाधायोग्या वृत्तिस्तया वृत्त्या निरालंबतया देहाद्यनुसंधानराहित्येन स्थितिरवस्थानमित्यर्थः शेषंस्पष्टम् ॥ १२३ ॥

भा. टी. सम्पूर्ण बाधाओंको दूरकर देहानुसन्धान परित्याग पूर्वक सम्पूर्ण ब्रह्ममयहै इसप्रकार ज्ञान करके जो ब्रह्मस्वरूप अवलम्बन कर स्थिति करनाहै उसको आत्मध्यान कहें हैं इसके होनेसे परम आनन्द प्राप्त होयहै ॥ १२३ ॥

निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ॥ वृत्तिविस्मरणंसम्यक् समाधि-ज्ञानसंज्ञकः ॥ १२४ ॥

सं. टी. अथान्यत्समाधिरूपं पंचदशमंगं लक्षयति निर्विकारतयेति निर्विकारतया विषयानुसंधानरहिततयांतःकरणवृत्त्या पुनरनंतरमेव ब्रह्माकारतया यत् सम्यक् प्रपंचसंस्काररहितं ध्यातृध्येयाकारवृत्तिशून्यं वृत्तिविस्मरणं द्वैताननुसंधानं स समाधिः पंचदशमंगमित्यर्थः । ननु वृत्तिविस्मरणस्याज्ञानरूपत्वात्कथं समाधित्वमित्याशंक्य ब्रह्मात्मैक्यबोधाभावे केवलवृत्तिविस्मरणस्य तथात्वेपि न ब्रह्मज्ञानसहितस्य तथात्वमित्याशयेन समाधिं विशिनष्टि ज्ञानसंज्ञकइति ज्ञानमिति संज्ञा यस्य स ज्ञानसंज्ञकः ब्रह्माकारतय

स्फुरणरूप इत्यर्थः उक्तंच " समाधिः संविदुत्पत्तिः परजीवैकतां प्रति " इति ॥ १२४ ॥

भा. टी. निर्विकार चित्त होकर अपनेको ब्रह्मस्वरूप ज्ञान करके सम्पूर्ण प्रकारके प्रपञ्च भावको परित्याग करना ज्ञानियोंका समाधि कहावे है ॥ १२४ ॥

इमं चाकृत्रिमानंदं तावत्साधुसमभ्यसेत् ॥ वश्यो यावत्क्षणात्पुंसः प्रयुक्तः सन्भवेत्स्वयम् ॥ १२५ ॥

सं. टी. इदानीं यदर्थं सांगमिदं निदिध्यासनमुक्तं तदाह इममिति अकृत्रिमानंदं स्वरूपभूतानंदाभिव्यंजकं निदिध्यासनमित्यर्थः चकाराद्यथाबुद्धि वेदांतविचारमपीति स्पष्टमन्यत् ॥ १२५ ॥

भा. टी. जबतक पूर्वकहे हुए आनन्दमय ब्रह्मके वशमें नहीं होय तबतक कृत्रिम आनन्द ( निदिध्यासन ) उत्तम प्रकारसे अभ्यास करे परन्तु जिस समय निदिध्यासनादि द्वारा स्वयं ब्रह्मस्वरूप होजाय उस समय निदिध्यासनादिकका कोई प्रयोजन नहीं ॥ १२५ ॥

ततः साधननिर्मुक्तः सिद्धो भवति योगिराट् ॥ तत्स्वरूपं न चैतस्य विषयो मनसोगिराम् ॥ १२६ ॥

सं. टी. एवमभ्यसतः फलमाह ततइति साधननिर्मुक्तः साधनाभ्यासरहित इत्यर्थः एतस्य योगिनः तद्वेदांतप्रसिद्धं स्वरूपं ब्रह्मैवेतिभावः ॥ १२६ ॥

भा. टी. पूर्व कहे हुए योगाभ्यास करनेसे पुरुष सिद्ध होयहै सम्पूर्ण प्रकारके साधनोंसे छूटजायहै और योगियोंका राजा होय है उस ब्रह्मका स्वरूप योगियोंके मन वाणीकाभी विषय नहीं है ॥ १२६ ॥

समाधौक्रियमाणेतु विघ्नआयांतिवै बलात् ॥ अनुसंधानराहित्यमालस्यं भोगलालसम् ॥ १२७ ॥ लयस्तमश्च विक्षेपो रसास्वादश्चशून्यता॥ एवंयद्विघ्नबाहुल्यं त्याज्यंब्रह्मविदाशनैः॥ १२८॥

सं. टी. अखंडैकरसब्रह्मस्वरूपत्वेनावस्थानलक्षणमोक्षफलदोऽयंसमाधिपर्यंतो योगो गुर्वनुग्रहवतांसुकरोस्ति तथापि सुकर इत्यनादरो न कार्यः विघ्नबाहुल्यसंभवादित्याह द्वाभ्यां समाधाविति स्पष्टोऽर्थः ॥ १२७ ॥ लयइति तत्रलयो निद्रा तमः कार्याकार्याऽविवेकः विक्षेपो विषयस्फुरणं रसास्वादो धन्योहमित्याद्यानंदाकारावृत्तिः चपुनः शून्यता चित्तदोषः रागद्वेषादितीव्र-

वासनया चित्तस्य स्तब्धीभावः कषायः क्षुब्धतेत्यर्थः स्पष्टमन्यत् ॥ १२८ ॥

भा. टी. समाधि साधन कालमें अनेक प्रकारके विघ्न आनके बलसे निरोध करें हैं वह विघ्न यह हैं अनुसंन्धान-राहित्य अर्थात् किसीप्रकार अनुसंधान नहीं रहना, आलस भोगलालसा, लय अर्थात निद्रा, तम अर्थात् कार्य्या-कार्यका अविवेक, विक्षेप अर्थात् विषयानुराग, रसास्वाद अ-र्थात् मैं बडा धन्यहूँ इसप्रकार आनन्दका अनुभव करना, शून्यता अर्थात् रागद्वेषादिकसे चित्तकी विकलता, इसप्रकार विघ्नोंके समूहको ब्रह्मवेत्ताओंको शनैःशनैः त्याग करना योग्यहै ॥ १२७ ॥ १२८ ॥

भाववृत्त्या हि भावत्वं शून्यवृत्त्या हि शून्यता ॥ ब्रह्मवृत्त्याहिपूर्णत्वं तथा पूर्णत्वमभ्यसेत् ॥ १२९ ॥

सं. टी. वृत्तिरेव बंधमोक्षकारणमित्याह भावेति भाववृत्त्या घटाद्याकारवृत्त्या भावत्वं तन्मयत्वं भवती-ति शेषः शून्यवृत्त्या अभाववृत्त्या शून्यता जडतेत्यर्थः हीति लोकप्रसिद्धौ तथा ब्रह्माकारवृत्त्या पूर्णत्वं हीति विद्वत्प्रसिद्धौ ततः किमतआह पूर्णत्वमिति ॥ १२९ ॥

भा. टी. जिसके चित्तकी वृत्ति घटादि भाव पदार्थोंमें जायहै

उसको घटादि पदार्थोंका प्रकाश होयहै जिसके चित्तकी वृत्ति शून्यताको आश्रय करे है उसका चित्त शून्यमय होयहै इसीप्रकार जिसके चित्तकी वृत्ति चैतन्यस्वरूप ब्रह्ममें जाय है उसको पूर्ण ब्रह्मका लाभ होयहै इससे पुरुषको जिसप्रकार पूर्ण ब्रह्मत्वका लाभ होय उसतरहका अभ्यासकर लाभ उठाना योग्यहै ॥ १२९ ॥

**येहि वृत्तिं जहत्येनां ब्रह्माख्यां पावनीं पराम् ॥ तेतुवृथैवजीवंति पशुभिश्च समा नराः॥१३०॥**

सं. टी. इदानीं ब्रह्ममयीं वृत्तिं स्तोतुं तद्वृत्तित्यागपरान्निंदति येहीति ये एनां ब्रह्माख्यां वृत्तिं जहति त्यजंति तेतु वृथैवजीवंतीत्यन्वयः स्पष्टमन्यत् ॥ १३० ॥

भा. टी. जो पुरुष परमपवित्र और सबसे उत्कृष्ट ब्रह्मवृत्तिका परित्याग करे हैं वह मनुष्य इस संसारमें वृथाही पशुओंकी समान जीवन धारण करे हैं ॥ १३० ॥

**येहि वृत्तिं विजानंति ज्ञात्वापि वर्धयंति ये ॥ तेवै सत्पुरुषाधन्या वंद्यास्ते भुवनत्रये ॥ १३१॥**

सं. टी. संप्रति तामेव वृत्तिं विवर्द्धयितुं ब्रह्मवृत्तिपरान्सत्पुरुषान् स्तौति येहीति स्पष्टम् ॥ १३१ ॥

भा.टी. जो ब्रह्मवृत्तिको जानतेहैं और जानकर बढावें हैं वह सत्पुरुष धन्य और तीनों भुवनमें पूजनीय होयहैं ॥ १३१ ॥

येषां वृत्तिः समा वृद्धा परिपक्वा च सा पुनः ॥ तेवैसद्ब्रह्मतां प्राप्ता नेतरेशब्द-वादिनः ॥ १३२ ॥

सं. टी. एवं ब्रह्मवृत्तिपरान्स्तुत्वाऽधुना तेषां ब्रह्म-प्राप्तिरूपं फलमाह येषामिति सुगमम् ॥ १३२ ॥

भा. टी. जिन पुरुषोंकी ब्रह्मवृत्ति अत्यन्त वृद्धिको प्राप्त होयहै और भलीप्रकार पक्कजाय है उनकोही सर्व स्वरूप ब्रह्मका लाभ होयहै और जो केवल जिह्वाही से अहं ब्रह्म अहंब्रह्म कहें हैं उनको ब्रह्मका लाभ किसी समयभी नहीं होयहै ॥ १३२ ॥

कुशला ब्रह्मवार्त्तायां वृत्तिहीनाः सुरा-गिणः ॥ तेप्यज्ञानितया नूनं पुनरायां-ति यांति च ॥ १३३ ॥

सं. टी. तानेव शब्दवादिनो निंदति कुशलाइति स्पष्टम् ॥ १३३ ॥

भा. टी. जो पुरुष ब्रह्मवृत्ति करके हीनहोय हैं और ब्रह्म-वेत्तापन प्रकाश करें हैं इसी प्रकार ब्रह्ममें, दिखावें हैं वह अज्ञान वश वारम्वार संसारमें आवागमन करें हैं ॥ १३३ ॥

निमेषार्धं न तिष्ठंति वृत्तिं ब्रह्ममयीं वि

ना ॥ यथातिष्ठंतिब्रह्माद्याः सनकाद्याः शुकादयः ॥ १३४ ॥

सं. टी. यत एवं तस्माद्ब्रह्मनिष्ठैर्ब्रह्मवृत्त्यैव सर्वदा स्थातव्यमिति सूचयितुं ब्रह्मादीनामुदाहरणमाह निमेषेति यथा ब्रह्माद्यास्तथासनकाद्याः यथा सनकाद्यास्तथा शुकाद्या इति संप्रदायो दर्शितः एतेन ब्रह्मादिसेव्यत्वादितिश्रेष्ठोयं समाधिपर्यंतो राजयोगः सर्वदा मुमुक्षुभिः सेवनीय इति ध्वनितम् ॥ १३४ ॥

भा. टी. जिस प्रकार ब्रह्मादि देवगण सनकादि मुनिगण शुकादि ब्रह्मपरायण गण सर्वकालमें ब्रह्ममें लीन रहे हैं तिसी प्रकार मोक्षकी इच्छाकरने वाले पुरुष ब्रह्ममयी वृत्तिके विना अर्थात् ब्रह्मानुसन्धानके विना पलभरभी नहीं खोवें हैं अर्थात् सदा ब्रह्मवृत्तिमें तत्पर रहे हैं ॥ १३४ ॥

कार्ये कारणता याता कारणे नहिकार्यता ॥ कारणत्वंततोगच्छेत्कार्याभावे विचारतः ॥ १३५ ॥

सं. टी. तदेवंस्वाभिमतं सांगं राजयोगमभिधाय पूर्वोपक्रांतं सांख्यापरपर्यायं वेदांतविचारमुपसंहरति-कार्ये इत्यादिपंचभिः श्लोकैः कार्येति कार्ये घटपटादिरूपे विकारेकारणता मृत्तंत्वादिरूपा सर्वविकाराधिष्ठानता आयाताऽनुगता कारणेतु कार्यता नहीति प्रसिद्धं

ततः कारणात्कार्याभावे कारणत्वं गच्छेत् ननु कथं कारणे कार्याभाव इत्यतआह विचारतइति यथायं दृष्टांतस्तथाकाशादिकार्ये कारणता आकाशोस्तिभातीत्यादिव्यवहारहेतुभूता सत्यज्ञानादिरूपब्रह्मणः कारणता आयाता अनुगता कारणे ब्रह्मणि तु आकाशादिकार्यता-नहीति अतः परमार्थतः आकाशाद्यभावे ब्रह्मणः कारण-तापि नहीति दार्ष्टांतिकोऽर्थः ॥ १३५ ॥

भा. टी. कार्य्यमें कारणता रहे है परन्तु कारणमें कार्य्यता नहीं मालूम होय है कार्य्यका भाव होनेसे कारणता अपने आप सिद्ध होजाय है । इसी प्रकार विचार करनेसे आकाशादि कार्य सम्पूर्ण अनित्य मालूम होय हैं और केवल ब्रह्म ही कारण स्वरूप सत्य मालूम होय है ॥ १३५ ॥

अथ शुद्धंभवेद्वस्तु यद्वै वाचामगोचर-
म् ॥ द्रष्टव्यं मृद्धटेनैव दृष्टांतेन पुनः
पुनः ॥ १३६ ॥

सं. टी. ततः किमत आह अथेति अथानंतरं कार्य-कारणभावनिवृत्तौ यच्छुद्धं मनोवाचामगोचरं वस्तु तद्भवेत् "यतो वाचो निवर्त्तते" इत्यादिश्रुतिप्रसिद्धि-द्योतनार्थो हि शब्दः । ननु बुद्धेः क्षणिकत्वेनैकदा तथा विचारितेपि पुनरन्यथैव भातीत्यत आह द्रष्टव्य-मिति ॥ १३६ ॥

भा. टी. जब कार्य कारणभाव निवृत्तहोय है तब शुद्ध मन और वाणीसे अगोचर जो ब्रह्मवस्तु है सोई रहे है जैसे घटका नाश होने पर मृत्तिका ही बाकी रहे है ऐसा ही वारम्वार समझना ॥ १३६ ॥

**अनेनैव प्रकारेण वृत्तिर्ब्रह्मात्मिका भवेत् ॥ उदेति शुद्धचित्तानां वृत्तिज्ञानं ततः परम् ॥ १३७ ॥**

सं. टी. न केवलमयं विचारो ज्ञानसाधनमेवापितु ध्यानसाधनमपीत्याह अनेनेति अनेनैवप्रकारेण शुद्धचित्तानां वृत्तिज्ञानम् उदेति ततः परं ब्रह्मात्मिका वृत्तिर्भवेदिति योजना पदानामर्थस्तु स्फुट एव ॥ १३७ ॥

भा. टी. इस प्रकार ब्रह्मात्मिका वृत्तिहोय है तदनन्तर शुद्ध चित्तहोनेसे वृत्तिके ज्ञानका उदय होय है ॥ १३७ ॥

**कारणं व्यतिरेकेण पुमानादौ विलोकयेत् ॥ अन्वयेनपुनस्तद्धि कार्ये नित्यं प्रपश्यति ॥ १३८ ॥**

सं. टी. तमेव विचारं विशदयति द्वाभ्यां कारणमिति आदौ प्रथमं कारणं व्यतिरेकेण कार्यविरहेण विचारयेत् पुनस्तत् कारणमन्वयेनानुवृत्त्या कार्येपि नित्यं प्रपश्यतीति ॥ १३८ ॥

भा. टी. मुमुक्षु पुरुष पहले कारणके विना कार्य्यकी

उत्पत्ति नही होय इससे व्यतिरेकानुमानसे कारणका निश्चय करै ( यथाहि कार्य्यं सकारणकम् ) ऐसे अनुमानमें ( यदि कारणं न स्यात् तर्हि कार्य्यमपि नस्यात् कार्य्यं दृश्यते अतः कारणमप्यनुमीयते ) यदि कारण नहीं होयतौ कार्य्यभी नहींहोय कार्य्य है इस कारण कारणका अनुमान किया जाय है । इस प्रकार व्यतिरेकानुमान होय है ॥ १३८ ॥

**कार्ये हि कारणं पश्येत्पश्चात्कार्यं विसर्जयेत् ॥ कारणत्वंततोगच्छेदवशिष्टं भवेन्मुनिः ॥ १३९ ॥**

सं. टी. अथैवं विचारयेदित्याह कार्येति आदौ कार्ये कारणमेव विचारयेत् पश्चात्तत्कार्यं विसर्जयेत् नानुसंदध्यात् कार्यवर्जने सति कारणत्वं स्वत एव गच्छेत् एवं कार्यकारणवर्जनेऽवशिष्टं सच्चिन्मात्रं मुनिर्मननशीलः स्वयमेव भवेदिति ॥ १३९ ॥

भा. टी. पहले कार्य्यसे कारणका निश्चयं करै पीछे कार्य्यका त्याग कर देय, कार्य्यका त्याग करनेपर कारण आपही अवशिष्ट रह जाय है इसी प्रकार कार्य्यके वर्जित होनेसे मुनिगण स्वयं चिन्मय स्वरूप होजाय हैं ॥ १३९ ॥

**भावितं तीव्रवेगेन यद्वस्तु निश्चयात्मना ॥ पुमांस्तद्धि भवेच्छीघ्रं ज्ञेयं भ्रमरकीटवत् ॥ १४० ॥**

सं. टी. ननु विचारजन्यापरोक्षज्ञानेन मुनेर्ब्रह्मत्वं भवतु नाम परन्तु परोक्षज्ञानिनः कथं भवेदित्याशंक्य तीव्रभावनया परोक्षज्ञानिनोपि ब्रह्मत्वं भवेदिति सदृष्टांतमाह भावितमिति । अयंभावः यद्यपि परोक्षज्ञानेन प्रमातृगतावरणनिवृत्तौ सत्यामपि प्रमेयगतमावरणं न निवर्त्तते तथापि निश्चयात्मना निश्चययुक्तबुद्धिमता पुरुषेण यद्वस्तु सच्चिदानंदं ब्रह्म तीव्रवेगेनाऽहर्निशं ब्रह्माकारवृत्त्याभावितं चिंतितं तद्वस्तु ज्ञेयमपरोक्षेण ज्ञातुं योग्यं ब्रह्म शीघ्रमाचिरेण पुमान् भवेत् प्रत्यगभिन्नब्रह्मभावनया पुरुषो ब्रह्मरूपो भवतीत्यर्थः हीति विद्वत्प्रसिद्धौ । तत्र सर्वलोकप्रसिद्धं दृष्टांतमाह भ्रमरकीटवदिति । भ्रमरेण कुतश्चिदानीय जीवन्नेव स्वकुटयां प्रवेशितो यः कीटः स यथा भयात् भ्रमरध्यानेन भ्रमरएव भवति तद्वदिति ॥ १४० ॥

भा. टी. निश्चयात्मा पुरुषकी तीव्रभावना करके जो मनुष्य जिस वस्तुकी चिन्ता करे है शीघ्रही भ्रमरकीटकी तरह तद्रूप होजाय है, जैसे भ्रमरकीट कीडाविशेष होयहै वह अपने स्थानमें जिस दूसरे कीडेको लाके धरे है वह लाया हुआ कीट भयके मारे भ्रमरकीटका विचार करे है विचार करते २ तद्रूप होजाय है ऐसी लोकमें प्रसिद्धि है, इसी प्रकार पुरुष ब्रह्मका विचार करता करता तद्रूप होजाय है ॥ १४० ॥

५

अदृश्यंभावरूपंच सर्वमेवचिदात्मक-
म् ॥ सावधानतया नित्यं स्वात्मानंभा
वयेद्बुधः ॥ १४१ ॥

सं. टी. यदि पूर्वश्लोकोक्तदृष्टांते भावनाबलादेवा-न्यस्यान्यत्वं भवेत् तर्हि ब्रह्मविवर्त्तत्वेन ब्रह्मरूपस्य विश्वस्य ब्रह्मभावनया तद्रूपता भवेदिति किमु वक्त-व्यमित्याशयेन सर्वात्मभावनामाह अदृश्यमिति । अ-दृश्यं परोक्षं भावरूपं प्रत्यक्षंच सर्वं विश्वं यद्वा अ-दृश्यं द्रष्टृरूपं भावरूपं दृश्यं चकारादृर्शनं एतत्सर्वं त्रिपुटयात्मकं जगद्भ्रांत्याऽऽत्मभिन्नत्वेन भासमानमपि चिदात्मकं निर्विशेषस्फुरणमात्रस्वरूपं स्वात्मानमेव बुधः अद्वैतज्ञानानिष्ठः सावधानतया स्थिरवृत्त्या नित्यं भावयेत्सकलमिदमहं च ब्रह्मैवेति सर्वदा पश्येदि-त्यर्थः ॥ १४१ ॥

भा. टी. ज्ञानी पुरुष सदाही सावधान होकर अदृश्य दृश्य सम्पूर्ण संसारको चिन्मय ब्रह्म चिन्तना करै ॥ १४१ ॥

दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण
चिंतयेत् ॥ विद्वान्नित्यसुखे तिष्ठेद्धि-
या चिद्रसपूर्णया ॥१४२॥

सं. टी. एतदेव विवृणोति दृश्यमिति दृश्यं घटादि-कमदृश्यतामधिष्ठानचिद्रूपतां नीत्वा हीति विद्वत्प्र-

सिद्धौ ब्रह्माकारेण कल्पितस्य परिच्छिन्नस्य नामरूपादेर्निवृत्तिपूर्वकं बृहदाकारेणापरिच्छिन्नरूपेण चिंतयेदित्यर्थः ततः किमत आह विद्वानिति । चिद्रसपूर्णया चिदेवरसश्चिद्रसश्चिदानंदस्तेन पूर्णया धिया नित्यसुखे अविनाशिसुखे विद्वांस्तिष्ठेदिति ॥ १४२ ॥

भा. टी. दृश्य वस्तुको अदृश्यकी तरह करके ज्ञानी पुरुष ब्रह्मस्वरूप चिन्तना करे तिस चिन्मय ज्ञानके होनेसे विद्वान् पुरुष चिन्मय रससे भरी हुई बुद्धिसे नित्य सुखसे अस्थान करै ॥ १४२ ॥

एभिरंगैःसमायुक्तो राजयोग उदाहृतः ॥ किंचित्पक्वकषायाणां हठयोगेनसंयुतः ॥ १४३ ॥

सं. टी. इदानीमुक्तं स्वाभिमतयोगमुपसंहरति एभिरिति । किंचित्स्वल्पं पक्काः दग्धाः कषाया रागादयो येषां तेषां हठयोगेन पातंजलोक्तेन प्रसिद्धेनाष्टांगयोगेन संयुतोयं वेदांतोक्तो योग इति शेषं स्पष्टम् ॥ १४३ ॥

भा. टी. इन अङ्गोंसे युक्त योगको राजयोग कहैं हैं जिनका विषयोंमें राग नहीं रहे है तिस पक्षमें हठ योग युक्त योगही राजयोग कहावे है ॥ १४३ ॥

परिपक्वंमनोयेषां केवलोयंचसिद्धिदः॥

गुरुदैवतभक्तानां सर्वेषां सुलभोज-
वात् ॥ १४४ ॥

सं. टी. अयं राजयोग एव केषां योग्य इत्याकां-
क्षायां सर्वग्रंथार्थमुपसंहरन्नाह परिपक्कमिति । येषां मनः
परिपक्कं रागादिमलरहितमितियावत् तेषामित्यध्याहारः
तेषां जितारिषड्वर्गाणां पुरुषधुरंधराणां केवलः पातंज-
लाभिमतयोगनिरपेक्षः अयं वेदांताभिमतो योगःसिद्धिदः
प्रत्यगभिन्नब्रह्मापरोक्षज्ञानद्वारा स्वस्वरूपावस्थानलक्ष-
णमुक्तिप्रदः चकारोऽवधारणे नान्येषामपरिपक्कमनसा-
मित्यर्थः ननु परिपक्कमनस्त्वमतिदुर्लभ मित्याकां-
क्षायामस्यापि साधनत्वादतोऽप्यंतरंगसाधनमाह गुरुदै-
वतभक्तानामिति जवादतिशीघ्रमित्यर्थः सर्वेषामिति
वर्णाश्रमादिनिरपेक्षं मनुष्यमात्रं ग्रहीतव्यम् अतएव
गुरुदैवतभक्तेरंतरंगत्वं तथाचश्रुतिः "यस्यदेवे पराभक्ति-
र्यथादेवेतथागुरौ । तस्यैतेकथिताह्यर्थाः प्रकाशंतेमहा-
त्मनः" इति । स्मृतयश्च " तद्विद्धिप्रणिपातेन । श्रद्धा-
वाँल्लभतेज्ञानम्" इत्याद्याः । अयंभावः परिपक्कमनसा-
मपि दुःसाध्यानि साधनानि गुरुदैवतभक्तानां सुसाध्या-
निभवंतीतिहेतोर्गुरुदैवतभजनमेव स्वधर्माविरोधेन सर्वैः
कार्यमिति परमं मंगलम् ॥ १४४ ॥

भा. टी. जिनका मन परिपक्क होजाय है उनको केव

यही योग सिद्धिको देय है और जिनकी गुरु और देवताओं में भक्ति होयहै उनको यह योग अति सुलभ होयहै ॥१४४॥

## ॥ इति श्रीपरमहंसपरिव्राजकाचार्य-श्रीमच्छंकरभगवता विरचिताऽपरोक्षा नुभूतिः समाप्ता ॥

पूर्णेयमापरोक्ष्येण नित्यात्मज्ञानकाशिका । अपरोक्षानुभूत्याख्यग्रंथराजप्रदीपिका ॥ १ ॥ नमस्तस्मैभगवते शंकराचार्यरूपिणे ॥ येनवेदांतविद्येयमुद्धृतावेदसागरात् ॥ २ ॥ यद्ययंशंकरःसाक्षाद्वेदांतांभोजभास्करः॥नोदेष्यत्तर्हिकाशेत कथंव्यासादिसूत्रितम् ॥ ३ ॥ अत्रयत्संमतंकिंचित्तद्गुरोरेवमेनहि ॥ असंमतंतुयत्किंचित्तन्ममैवगुरोर्नहि ॥ ४ ॥ यत्प्रसादादहंशब्दप्रत्ययालंबनोह्ययः ॥अहंसजगदालंबः कार्यकारणवर्जितः॥५॥ तस्यश्रीगुरुराजस्य पादाब्जेतुसमर्पिता । दीपिकामालिकासेयं तत्कृपागुणगुंफिता ॥ ६ ॥ योहंस्वाज्ञानमात्राज्जगदिदमभवंखादिदेहांतमादौ स्वस्वप्नादिवदेवसोहमधुनास्वज्ञानतःकेवलम् ॥ ब्रह्मैवास्म्यद्वितीयंपरमसुखमयं निर्विकारंविबाधं जाग्रत्स्थानवदेवदेवगुरुसत्स्वल्पप्रसादोत्थितात् ॥ ७ ॥ इति श्रीपरमहंसपरिव्राजकाचार्य-

श्रीविद्यारण्यमुनिविरचिताऽपरोक्षानुभूतिदीपिका समाप्तिमगमत् ॥

इति श्रीशङ्कराचार्य्यविरचिता रुहेलखण्डान्तःपातिरामपुरवास्तव्यश्रीयुतभोलानाथात्मजपण्डितरामस्वरूपद्विवेदिगौडविरचितभाषयासमलंकृता चापरोक्षानुभूतिः समाप्तिमफाणीत् । श्रीहरिहराभ्यामर्पये ।

इदं पुस्तकं खेमराजश्रीकृष्णदास इत्यनेन स्वकीये " श्रीवेङ्कटेश्वर" स्टीमूमुद्रणयंत्रालयेऽङ्कयित्वा प्रसिद्धिमानीतम् ।

संवत् १९६५ शके १८३०.

